श्रीमुकुन्दरायो जयति ।
श्रीगोपाललालो जयति ।

# सूक्तिरत्नाकरः ।

१ वेदशास्त्रधर्मसंरक्षणार्थं दैवोद्धारार्थं आविर्भूत श्रीश्रीवल्लभाचार्य श्रीमहाप्रभुतनूज श्रीपूर्णपुरुषोत्तमस्वरूप श्रीश्रीविठ्ठलनाथ-दीक्षितात्मज महाराज गोस्वामि श्रीश्रीयदुनाथजीवंशावतंस श्रीमुकुन्दराय श्रीगोपाललालप्रभुसेवाप्रवीण छठे ६ घरके टीकेत गोस्वामि श्रीगिरिधरजीमहाराजके उदाराश्रयमें, श्रीश्रीमहाराजनें स्व निज सेवक भट्ट श्रीरामकृष्णशास्त्रीकूँ वितीर्ण शुद्धाद्वैत ब्रह्मविद्यामन्दिरनामक पुस्तकालयकी आडीसूँ ये सूक्तिरत्नाकरनाम ग्रन्थग्रह क्रमशः प्रकाशित होय है ।

प्राचीनशास्त्रग्रन्थ सुरक्षित रहें तथा प्रकाशित होयँ और याप्रकार विद्या विस्तार होय या उद्देश्यसूँ याकार्यको प्रारम्भकियोहे ।

३ अन्यत्र मुद्रित नहीं, तथा अन्यत्र मुद्रित उपयुक्त ग्रन्थ, नवीन परिष्कार पूर्वक शास्त्रीनके द्वारा शुद्धकराय प्रसिद्ध होयँहे ।

४ मत्प्रभुचरण गोस्वामि श्रीविठ्ठलनाथदीक्षितात्मज गोस्वामि श्रीरघुनाथजीवंशोद्भव आचार्यवर्य गोस्वामि श्रीगोविन्दरायजी-महाराज तथा भारतमार्तण्डपण्डितवर आशुकवि श्रीगट्टूलालाजीने श्रीयुत भुवनदासद्वारकादास कोठीसमध्यक्ष श्रेष्ठि श्रीहरिदास श्रीबालकृष्णदासकी अध्यक्षतामें प्रतिष्ठापित विद्यालक्ष्मीपाठशालाके शास्त्री तथा और हू विद्वज्जन शोधन कार्यकारी होयहैं । सकल-शास्त्ररसिकनकूं सुलभ होयँ याके लिये मूल्य स्वल्प राखनेमे आवे है । मार्गव्यय पृथक् नहीं लगे ।

५ याविषयमें सकल सज्जननकें प्रति कथन हे जो एतदर्थ प्रत्येक शास्त्रके ग्रन्थ यथा— वेद वेदाङ्ग षड्दर्शन स्मृति पुराण उपपुराण

धर्मशास्त्र अलङ्कार वैद्यक मन्त्र तन्त्र नाटक काव्य इत्यादि तथा इनके व्याख्यान आवश्यक हैं। सो जो महाशय कृपापूर्वक धर्मार्थ, अथवा मूल्यद्रव्यलेयकें, अथवा कोई अन्य प्रकारसूँ जैसें आगे सूची में लिखी वितनेमूल्यकी पुस्तक लेयकें लिखित पुस्तक देयवो अभीष्ट करें विननें आगे लिखे पतेसूँ पत्रव्यवहार अथवा यथासम्भव साक्षाद् भाषणकरकें निश्चय कर्तव्य है।

६ सम्प्रति यहाँ जितने ग्रन्थ हैं तथा आगे संगृहीत होयँगे विनकी जितनी प्राचीन लिखित प्रती मिले सो सर्व संग्राह्य हैं। कारण पुस्तकनमें अनेकप्रकारके पाठ तथा न्यूनाधिकभाव उपलब्ध होयहैं। तासूँ जो महाशय संग्रहके लिये धर्मार्थ पुस्तक भेजेंगे विनको सत्कार पूर्वक स्वीकार होयगो। और भेजवेवारे महाशयको नाम अभिज्ञान सब लिखकें सो पुस्तक संगृहीत रहेगी। और प्रसिद्धीके समय सब व्यवस्था प्रसिद्ध करी जायगी॥

७ मुद्रित पुस्तकनके विषयमें कोई पण्डित जन कछु व्याख्यान परिष्कार, अशुद्धिशोधन तथा कोटिक्रम लिखकें पठावेंगे तो मुद्रित पुस्तकके सङ्ग सुरक्षित रहेगो, सो दूसरी आवृत्तीमें विचारपूर्वक सङ्ग मुद्रित होयगो। और यदि कोई टीका टिप्पण प्राचीन होयगो तो समयानुसार द्वितीयावृत्तीके पूर्व ही प्रकाशित होयजायगो।

८ जो उदाराशय या धर्मकार्यमें भगवत्सेवा करनो विचारे विननें। श्रीगोपालमन्दिर अधिकारी मुकुन्ददास गोपालदास तथा रत्नगोपालभट्ट योग्य काशी। या पतेसूँ प्रथमत मूल्य द्रव्य तथा स्वाभीष्टपुस्तक नाम पत्र भेज के पुस्तक मँगावनी। और जो लोक व्यवहारमार्गसूँ पुस्तक मँगावें विननें आगे लिखे पतेसूँ मँगावनों।

९ परदेशीय ग्राहकनकूँ, वी०पी० द्वारा पुस्तक मगाँयवो सरल होयगो सो ग्राहक महाशयननें तद्द्वारा पुस्तक मँगायलेनो।

ठि० कार्याध्यक्ष रत्नगोपाल भट्ट। चौखम्बाबाजार।
सेठ मधुवनदास द्वारकादासकी धर्मशाला। बनारस।

पुस्तकप्राप्तिस्थान—

हरिदास हरिकृष्णदास गुप्त। चौखम्बासंस्कृत पुस्तकालय। बनारस।

श्रीहरि ।

श्रीविठ्ठलेश्वरो जयति ॥

# भक्तिमार्तण्डः ।

गोस्वामिश्रीगोपेश्वरजीमहाराजविरचितः ।



चरीकर्त्तुं व्यक्तं भजनमहिमानं समतुलं
ददौ भुक्तं स्वप्ने गिरिशनमा मृग्यमनिशम् ॥
ततस्तेने मह्यं मननसुयशोमाननमिदं
भजे स्मारं स्मारं गुणचयमहोऽजामिल इव ॥ १ ॥
न्यक्कृत्य खलु पर्ज्जन्यं वर्षन्ति स्वजनेषु ये ॥
अदेयदानदक्षत्वादाचार्यास्तान् नमाम्यहम् ॥ २ ॥
क्षीराब्धेर्मथने स्वकीयविभवे स्वीकृत्य कूर्माकृतिं
पृष्ठेऽधाद्गिरिराजमेव सदयोऽकार्षीच्च भक्तप्रियम् ॥
स्नेहोदध्यवगाहनैकपरमानन्दाप्तिसर्वस्वक-
स्तस्मै तातमहाशयाय हरये कुर्वे नमो भूतये ॥ ३ ॥
भक्तिमार्गाब्जमार्त्तण्डवंशमार्त्तण्डरूपिणः ॥
वन्देऽहं तातचरणान् भक्तिमार्त्तण्डसिद्धये ॥ ४ ॥
वेदादिसर्वशास्त्रार्थभूतां ब्रह्मिष्ठदुर्ल्लभाम् ॥
भक्तिं वक्ष्ये यथाशास्त्रं प्रभुभिर्विशदीकृताम् ॥ ५ ॥

ननु कथं वेदादिशास्त्राणामर्थो भक्तिर्यतः कर्मकाण्डस्य धर्मे, ज्ञानकाण्डस्य च ज्ञाने पर्यवसानमितिचेदुच्यते । यत्र नाऽन्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन

आत्मानन्दः स स्वराड् भवति । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः । भक्तिरस्य भजनं, तदिहामुत्र च फलभोगनैराश्येनामुष्मिन् मनःकल्पनम् । तदेव च नैष्कर्म्यं सकलम्। परं ब्रह्मैतद्यो ध्यायति रमति भजति सोऽमृतो भवति । चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः । नाहं वेदैर्न तपसा न दानेन न चेज्यया * शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज * वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा । भक्त्या तुतोष भगवान् गजयूथपाय । नालं द्विजत्वं देवत्वमित्युपक्रम्य, प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् । अथातो भक्तिमीमांसा । सा पराऽनुरक्तिरीश्वरे । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथेत्यादिश्रुतिस्मृतिसूत्रपञ्चरात्रादिवाक्यसहस्रैर्भक्तिः प्रतिपाद्यत इतिचेत् । इत्थम् । छान्दोग्यसप्तमप्रपाठके, अधीहि अध्यापयेत्यर्थः । अधीष्व विज्ञापयेति विश्वेश्वरः । भाष्यप्रकाशे तु अन्तर्भावितणयर्थ इतिव्याख्यातम् । तदु होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति होवाचेत्यनेन प्रथमतो मुख्या ब्रह्मविद्या नोपदेशार्हेति सनत्कुमारो नारदाधिकारं ज्ञातुं, यद्वेत्थ तेन मोपसीद । यत् त्वं जानासि तत्कथनेन मदुपसन्नो भव स्वाधीतं वद । ततोऽतिरिक्तं तुभ्यं कथयिष्यामीत्युक्तवान् । ततो नारदः स्वाविदितम् ऋग्वेदादिसर्पदेवजनविद्यान्तमुक्तवान् । स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या सर्पदेवजनविद्यामेतद्भगवोऽध्येमीत्यनेन । तत्र ऋग्वेदादि पुराणान्तं प्रसिद्धम् । वेदानां वेदं व्याकरणं, पित्र्यं श्राद्धकल्पं, राशिं गणितं, दैवम् उत्पातज्ञानं, निधिं महाकालादिनिधिशास्त्रं, वाकोवाक्यं तर्कशास्त्रम्, ए-

कायनं नीतिशास्त्रं, देवविद्यां निरुक्तं, ब्रह्मविद्यां शिक्षाकल्परूपाम्, भूतविद्यां भूततन्त्रम्, क्षत्रविद्या धनुर्वेदम्, नक्षत्रविद्यां ज्योतिषम्, सर्पविद्या गारुडम्, देवजनविद्या गन्धर्वविद्याम्, भगवन् अध्येमि स्मरामीत्युक्त्वा सोऽहं भगवो मन्त्रविदेवास्मि। शब्दार्थमात्रवित्त्वाद् । यतः परोक्षज्ञानवानेवास्मीति स्वाधिकारमुक्त्वा, नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति ।सोऽहं भगवः शोचामि तं मा भगवॉल्लोकस्य पारं तारयत्विति नारदेनोक्तः सनत्कुमारः । अत्र।श्रुवाक्यप्रामाण्याच्छोकेन लिङ्गेन नात्मवित्त्वं स्वस्यानुगायात्मज्ञापनेन शोकतरणायोपसन्नोऽस्मीति नारदाशयः । तत्र मन्त्रविदेवेत्यत्रैवकारव्यावर्त्यो योऽर्थस्तद्वाचक नात्मवित्पदम् । भगवद्दृशेभ्यो भगवत्सदृशेभ्यः । इति बोध्योऽर्थः । ततः सनत्कुमारस्तदधिकारमवगत्य मुख्यविद्योपदेशयोग्यत्वसम्पादनार्थं, यद्वै किञ्चाध्यगीष्ठा नामैवैतदित्यादिना नारदोक्तानां सर्वेषां नामत्वबोधनपूर्वकं नाम्नो ब्रह्मत्वेनोपासनमुपदिश्य यावन्नाम्नो गत तत्रास्य यथाकामचारो भवतीति तत्फलं शोकतरणायोक्तवान् । तदा नारदः केवलनाम्न उपासने उक्तफलाभावं तस्य ब्रह्मत्वेनोपासने तूक्तफल, तदपि नाम गतिपरिच्छिन्नमिति ज्ञात्वा तेन शोकातरणं चाज्ञाय ततोऽधिकं जिज्ञासमानः, अस्ति भगवो नाम्नो भूय इति नाम्नो वा यद् भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति पृष्टः सनत्कुमारो वाग्वा नाम्नो भूयसीति नामविद्याव्यापकत्वं माहात्म्यमुक्त्वा वाचो ब्रह्मत्वेनोपासनं तत्फलं चोक्तम् । तत्र भूयःपदं न बाहुल्यार्थकं, न वा पुनरर्थकं, किन्तु आधिक्यार्थम् । तच्चोत्कर्ष इति तत्तन्माहत्म्यकथनादवसीयते । एवं नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलाऽन्नाप्तेजआकाशस्मराशा उक्ताः । तत्र नामवाचौ स्फुटे । मनो विवक्षालक्षणान्तःकरण-

वृत्तिः । संकल्पः कर्तव्याकर्त्तव्यसमर्थनरूपाऽन्तःकरणवृत्तिः । चित्तं चेतयितृत्वं प्राप्तकालानुसन्धानरूपम्, अतीतानागतविषयम्, प्रयोजननिरूपणसामर्थ्यं च । ध्यानं शास्त्रोक्तं, देवतालम्बनो विजातीयासंवलितः प्रत्ययसन्तान एकाग्रतापदपर्यायः । चिरकालस्थायिज्ञानपक्षे तु तादृश एक एव प्रत्ययो ज्ञेयः । विज्ञानं शास्त्राऽर्थविषयकं विशिष्टं ज्ञानम् । बलम् अन्नभक्षणजनितं मनसो विज्ञेयविभावनसामर्थ्यम् । अन्नमापस्तेज आकाशश्च प्रसिद्धाः । स्मरः स्मरणम् । अप्रयत्नश्चित्तव्यापारः । आशा अप्राप्तवस्त्वाकाङ्क्षा । तृष्णा कामाद्यपरपर्याया । एवमेतेषां स्वरूपमुपनिषद्व्याख्यानाज्ज्ञेयम् । एतेषामुपासनं ब्रह्मत्वेनोक्त्वा प्राणस्य त्वाशातो भूयस्त्वं माहात्म्यं चोक्त्वा, स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादीत्यनेन प्राणदर्शनादिमतोऽतिवादित्वमुक्तम् । अपहतपाप्मत्वेन प्राणस्य उत्कृष्टत्वात् । न तु परमकाष्ठापन्नोत्कृष्टवादित्वम् । प्राणविद्यया अपर्यवसानात् । अग्रे आत्मतः प्राण इति श्रावणाच्च । अत एव, तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापन्हुवीतेत्युक्त्वा, एष तु वा अतिवदति यः सत्येनातीति प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्तम् । ततो नारदेन प्राणस्य तत्त्वं न प्राणः, किन्त्वन्यदिति बुद्ध्वा, सोऽहं भगवः सत्येनाति - वदानीति स्वाभिप्रायोऽभाणि । तत्र वदतीत्यन्तर्भावितमनर्थः । सत्येनातिविलक्षणीत्याशयात् । ततः सनत्कुमारः, सत्य त्वेव विजिज्ञासितव्यमित्यादिना तस्य सत्यादिजिज्ञासामुत्पाद्य विजिज्ञासितव्यत्वेन सत्यविज्ञानमतिनिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्तवान् । तत्र सत्यम् अर्थमनतिक्रम्य वर्त्तमानं वस्तुस्वरूपम् । विज्ञानं तद्विषयकं विशिष्टज्ञानम् । मतिस्तर्केण तदर्थस्वरूपविचारः । श्रद्धा आस्तिक्यबुद्धिः । निष्ठा तद्विषयक आदर-

त्तत्परस्वरूपः । कृतिस्तद्विषयकसाधनानुकूल इन्द्रियव्यापारः । सुखम् अनुकूलबुद्धिवेद्य आन्तरो धर्मः । इत्येवं लौकिकसमानाकारं तत्स्वरूपं ज्ञातव्यमित्येवमुक्त्वा सुखे विशेष वक्तुं तत्स्वरूपमाह । यो वै भूमा तत् सुखं, नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति । तेन प्राणस्य सत्यवदनादीनां स एव कारणं, तत्त्वं चेति तमेव ज्ञात्वा सत्यवदनेऽतिवादित्वमन्यथा नेत्यवगत्य भूमानं भगवो विजिज्ञास इति नारदस्य भूमस्वरूपस्य जिज्ञासायामाह । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति। अत्र सत्यर्थे सप्तमी। एवञ्च यस्मिन् दृष्टे श्रुते विज्ञाते सति दर्शनादिमतोऽन्यविषयकदर्शनश्रवणविज्ञानाभावो भवति, स भूमेत्यर्थो भवति। यत्र यस्मिन् भूम्नि तत्त्वेऽन्यद् द्रष्टव्यमन्येन करणेनान्यो द्रष्टा नपश्यत्येवं नान्यच्छृणोति नान्यद्विजानाति स भूमेति विश्वेश्वरः । ननु भूम्नि दृष्टे श्रुते विज्ञातेऽन्यदर्शननिषेधे कः प्रकारः ? किं विशेषदर्शनेन रजतादिवदन्यन्न पश्यति, उत कारणे कार्यमिव भूम्न्यन्यल्लीयते, अथवा नक्षत्रादिकं तिरस्कुर्वत् सूर्यतेज इवान्यत् तिरस्करोति भूमेति चेत् तत्राह । अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतम् अथ यदल्पं तन्मर्त्यमिति । एवञ्च पूर्वविकल्पपक्षोक्तं किमपि न भवति अपि तु भूम्नि दृष्टे श्रुते विज्ञाते तदानन्दैकपरतयाऽन्यदल्पं भवतीति न सुखत्वेन, नापि सुखसाधनत्वेन पश्यति, न शृणोति, न विजानातीत्यर्थः। ननु भूम्नो दर्शनश्रवणविज्ञानेष्वन्यतमेनैवं भावस्तदा शृण्वतो मम कुतो नास्ति । यदि च समुदितैस्तैस्तदा यत्र भूमा प्रकाशमानतया तिष्ठति तस्यैव भावो भवति, नान्यस्येत्यभिप्रायेन भूमाधार पृच्छति । स भगवः कस्मिन् प्रतिष्ठित इति नारदः तं प्रत्याह । स्वे महिम्नीति । श्रुतिभूतौ। अत्रापि को महिमेति

नारदशङ्कां स्वयमेव निराकुर्वन्नाह । यदि वा न महिम्नीति । गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति । नाहमेवं ब्रवीमि । तथाचैतेष्वहं भूमा प्रतिष्ठित इति न ब्रवीमीत्यर्थः । तर्हि क्व प्रतिष्ठित इत्याकाङ्क्षायामाह सनत्कुमारः । ब्रवीमीति ह होवाचाऽन्यो ह्यन्यस्मिन् प्रतिष्ठित इति । इतीह होवाचेतिश्रुतिवाक्यं, शेषं सनत्कुमारवाक्यम् । तथाच गोअश्वादिभ्योऽन्यो महिमा । तस्मिन् प्रतिष्ठित इत्यर्थः । तर्हि स कीदृग् येन तत्प्रतिष्ठितत्वं भूम्न इत्यत आह । स एवाऽधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम् इत्यथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति । तथाच यस्य पूर्वं स एवाधस्तादित्याद्युक्तरीत्या सर्वदिक्षु सर्वं परिदृश्यमानं भूमेति भातम् । अथ तदनन्तरम्, अतः एतस्माद्भानाद्धेतोरहङ्कारादेश एव पूर्ववद् भूमाभिन्नत्वेन स्वभानम् । अथ तदनन्तरम्, अतस्तादृशभानाद्धेतोरात्मादेश एव पूर्ववद् भूमाभिन्नत्वेनात्मभानम् । एवम्प्रकारभाववान् यः पुरुषस्तस्य महिमा तस्मिन् भूमा प्रतिष्ठित इति फलति ॥

विश्वेश्वरस्तु—भूमा कस्मिन् प्रतिष्ठित इति प्रश्ने स्वस्वरूपे प्रतिष्ठितः । अन्यो हि अन्यस्मिन् प्रतिष्ठितो भवति । भूमा तु स्वतो न भिन्न इति नान्यस्मिन् प्रतिष्ठितः । तत्र हेतुमाह । स एवेत्यादि । यतः स भूमैवाधस्तादित्यादिप्रकारेण सर्वरूप इति तद्व्यतिरिक्ताऽभावान्नाऽसौ परमार्थतः क्वचित् प्रतिष्ठित इति । अग्रे च, यत्र नान्यत् पश्यतीत्यधिकरणतया, स एवाधस्तादिति परोक्षतया च निर्देशाद् द्रष्टुर्जीवाद्भिन्नो भूमेति शङ्का स्यात्, त-

द्वारणायाहमात्मतया भूमानं निर्दिशति । अथातोऽहङ्कारादेश इति । अविवेकिनो देहेऽप्यहमिति प्रत्ययात्तस्यात्मत्वशङ्कावारणयोक्तम्, अथात आत्मादेश इतीत्यूचिवान् ॥ तत्र ॥ अक्षरे प्रतिष्ठितत्वस्य तत्प्रतिष्ठितत्वेऽपि स्वप्रतिष्ठत्वस्य प्रमेयप्रकरणे व्युत्पाद्यमानत्वात् । पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । एतावानस्य महिमेति विश्वस्य महिमत्वमुक्त्वा, अतो ज्यायाँश्च पूरुष इत्यनेन महिमभेदकथनान्महिमपदेन स्वरूपलाभाभावाच्च । भूमप्रतिष्ठागमकान् धर्मानाह । स एवं यद्यत्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवतीति । एषोक्तप्रकारकदर्शनमननविज्ञानवानुक्तप्रकारकरत्यादिमान् भवतीत्यने धर्मा भूमप्रतिष्ठितत्वगमका इत्यर्थः । तथाचैतद्धर्माश्रयो महिमेत्युक्तं भवति । महिमस्वरूपं तु सर्वात्मभाव इत्यग्रे वक्ष्यते । तादृशस्य शोकतीर्णत्वं वक्ति । स स्वराडित्यादिना । स भूमा-आत्मरत्यादिमान् स्वस्मिन्नेव राजते स्वस्मिन् भूमानं राजयतीति वा । दीप्तिरत्र शोभा । सा च निरवधिस्तैश्वर्यंततो भक्ताधीनत्वेऽधिका भवतीति । तदधीनत्वे तु भक्तस्य प्रयोजकत्वाद्भक्तस्य प्रयोजककर्तृत्वम् । भगवतस्तु प्रयोज्यकर्तृत्वम् । तथाच भक्तो भूमानं स्वाधीनीकरोतीत्यर्थः सम्पद्यते । तत्र भगवत्स्वाधीनीकरणं न कृतिसाध्यम् इति भगवदनुग्रहापेक्षम् । स च भगवद्रागः । कार्यकारणयोरभेदोपचारात् । इदमनुसन्धाय भाष्यप्रकाशे स्वस्मिन् भूमानं रञ्जयतीत्यर्थकथनं, न तु विग्रहवाक्यमिति बोध्यम् । यद्वा पूर्वोक्तस्य भगवतो भक्ते रागे सति शोभाधिक्यमिति, भगवान् भक्तभक्तिमान्, नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना * श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परेत्यादिवाक्योक्त-

भक्तराग एव राजृधातोरर्थः । तथाच राजयति रागयुक्तं करोतीत्यर्थः । तदर्थकथनं रञ्जयतीति । अथवा किमनया कुसृष्टया । रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः । * अथामुमाहू राजानं मनोरञ्जनकैः प्रजा इत्यत्र तथैव व्युत्पत्तेः । तस्य नामाद्याशाप्राणपर्यन्तेषु लोकेषु कामचारः स्वातन्त्र्यं भवतीति सर्वमाप्त्वा शोकपारतीर्णो भवतीत्यर्थः । एतेनैव शोकतरणसम्भवादेतदुपायातिरिक्तोपायवतो निन्दति । अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारा भवन्तीति । राजयति इति राजा रञ्जयतीति वा । एवञ्चान्यासक्तास्तथा भवन्ति इति सन्दर्भार्थः । एतेन सर्वात्मभावरूपा भक्तिरेवोच्यते । कथमितिचेदित्थम् । अत्र व्याख्यातरीत्याऽपि भूममहिमरूपः पुमान् परिचायितः । तस्य या स्फूर्तिरुक्ता सा नाखण्डब्रह्मज्ञानरूपा । तत् केन कं पश्येदित्यादिवत्तदाकाराभावात् । किन्तु सखण्डब्रह्मज्ञानरूपा । तत् केन कं पश्येदिति दृशः परिदृश्यमानं सर्वं चानूद्य तत्स्फूर्तिकथनात् । साऽपि न वामदेवादिस्फूर्त्तिरहं मनुरभवं सूर्यश्चेत्यादिसर्वत्राहङ्ग्रहरूपा । अहंकारादेशोत्तरं पुनरात्मादेशकथनेन तस्या व्यभिचारबोधनात् । अतः सा द्विविधाया अपि ज्ञानिस्फूर्तेरतिरिक्तेति तद्वानपि तद्विलक्षणः । स यदि पितृलोककामो भवतीतिवदस्य कामानामनुक्तत्वाद् दहराद्युपासकतोऽपि विलक्षणः । मर्त्यसुखानभीप्सुत्वाल्लोकतोऽपि विलक्षणः । किन्तु सत्यवदनादिकारणभूतकृत्यादिजनकभूमात्मकसुखलाभवत्त्वस्योक्तत्वात् पूर्वं भूमलाभवांस्तेन दृष्टश्रुतविज्ञातभगवत्कः परमभक्तः । तत्र ततोऽन्यदर्शनादिराहित्यस्योक्तत्वाद्विरहभावे प्रपञ्चविस्मारकपरमासक्तिरूपो योऽतिविगाढभावस्तेन सर्वत्र आसक्तिविषयो भगवत्स्वरूपमेव स्फुरतीति, स एवाधस्तादित्यादिनोक्तः । तेषां विरह-

भावक्तत्स्फूर्तिरूपाणां ज्ञानानां व्यभिचारिभावत्वेनाऽनियतत्वं ज्ञापयितुमहङ्कारादेशात् पूर्वं निरूपितस्य, स एवाधस्तादिना भूमस्फूर्तिरूपस्यावृत्त्या पुनः सर्वत्र स्फूर्त्तिमाह । अथात्मादेश इति । तथाचाग्रे आत्मरत्यादिपदैः रसरूपं भगवन्तं भजत एव धर्माणां रतिक्रीडामिथुनानन्दानां निरूपणाद् दृष्टश्रुतविज्ञातभगवत्को, भक्तिरसस्य संयोगवियोगभेदेन द्वैविध्याद् विरहभावेऽतिविगाढभावेन सर्वत्र तत्स्फूर्त्तिमान् भक्तो भूममहिमेति तस्य या स्फूर्तिः सोक्तरीतिकसर्वात्मभावे व्यभिचारिभावरूपैव, नान्यविधेति तेन तत्स्वरूपमेवात्रोक्तं भवतीति । ननु विरहस्य सर्वोपमर्दकत्वेन प्राणादिसर्वतिरोधानाद् व्यर्थमिदं सर्वं, संयोगाभावादिति चेत् तत्राह । तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतः कर्माण्यात्मत एवेदं सर्वमितीति । तथाच भगवतः सकाशात् प्राणादिस्थितिरिति न विरहेण सर्वोपमर्द इति लीलोपयोगसिद्धिरिति साऽपि भक्तवद्भावयोगमिकेति भावः । एतदेव दृढीकर्तुं श्लोकैः संग्रहार्थमाह । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् * सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ स एकधा भवति त्रिधा भवति पञ्चधा * सप्तधा नवधा चैव पुनश्चैकादश स्मृतः ॥ शतं च दशकश्चैव सहस्राणि च विंशतिः * आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति । पश्यः उक्तविधया भूमदर्शनवान् मृत्युं रोगं दुःखभावं च न पश्यति । दुःखतं दुःखित्वं न पश्यति इति विश्वेश्वरः । उतेति पादपूरणे । दु खमत्तामेव न पश्यति इति,

किं वक्तव्यं मृत्युरोगादर्शने इति पक्षान्तरे वा। तत्र हेतुः। सर्वमित्यादि। पश्यो भूमद्रष्टा सर्वं भूमात्मकं पश्यति। तेन न दुःखादिकं पश्यतीति। तस्य फलमाह। सर्वमाप्नोति। सर्वशः सर्वत्र सर्वेण सर्वमाप्नोतीति। न तस्य पुनः शोकः। प्राप्तौ प्रकारमाह। स एकधेत्यादि। अनेनात्मत आविर्भावतिरोभावौ इति पूर्वं यदुक्तं तत्राविर्भावप्रकारो विवृतः। स भूमैव उक्तप्रकारैः प्रकटो भवन् पश्यस्य सर्वं प्रापयतीति। यद्वा, पश्य एव भगवतः सकाशात्तत्तदनुभवार्थं तथा प्रकटीभवतीत्यर्थो बोध्यः। द्विधादिभवनप्रकारत्यागो मध्ये तिरोभावं ज्ञापयति। एतेन विरहसामयिकदशैव सन्दर्भार्थ इति सिद्धम्। एतस्य सर्वस्य मूलकारणमाह। आहारशुद्धौ सत्त्वशुद्धिरिति। सा च, त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः* उच्छिष्टभोजिनो दासास्तव मायां जयेमहीति प्रकारेण भगवद्दत्तप्रसादेन भवतीति सत्त्वं शोधयतीति। तच्छुद्धौ ध्रुवा पूर्वावस्थास्मृतिः। सा चावस्था, प्रस्थानरत्नाकरे उक्ता। तत्र ज्ञानस्य दशविधत्वं प्रतिज्ञाय चतुर्विधनिसज्ञानगणनायां जीवीयचैतन्यगुणस्यापि जीवाविनाभावित्वाज्जीवेऽन्तर्भावमुक्त्वा पूर्वापरानुसन्धानरूपा स्मृतिर्या सा तदिति तत्स्वरूपम्। जीवस्यानुस्मृतिः प्रतीत्यत्र तथैव विवरणात्। तत्र किं पूर्वापरानुसन्धानमित्याकाङ्क्षायां व्युच्चरणात् पूर्वं जीवस्यांशत्वेन ब्रह्माभेदात्तदुत्तरवर्त्तिनो व्युच्चरणोत्तरम् अविद्यासम्बन्धात् प्राक्कालवर्त्तिनो ज्ञानस्य सोऽहमिति पूर्वापरानुसन्धानस्वरूपमुक्तम्। तत्त्वमस्यादिवाक्योपदेशोत्तरमपि पूर्वोक्तमेवानुसन्धानम्। तथाऽजपायामपि इदमेव विद्यया स्वरूपलाभ इत्युक्तम्। विस्मृतकण्ठमणिन्यायेन तस्यैव पुनः प्रतिसाधनात्। इह च द्वितीयज्ञान स्मृतेरनुभवजन्यत्वेऽपि सत्त्वशुद्धौ ध्रुवा स्मृतिर्भक्तिरिति श्रीवल्लभाः। तदपि

कार्यकारणयोरभेदोपचारेण युक्तम् । अन्यथा, ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाह । आहारशुद्धावित्यादिनेति भाष्यं विरुद्ध्येत । परमतप्रवेशश्च । एतादृश्याः स्मृतेः प्रतिलम्भेऽविद्याकामकृतानां सर्वासां ग्रन्थीनां विप्रमोक्षः प्रकर्षेण ज्ञानिनोऽपि विमोक्ष इति श्लोकार्थः । विषयविज्ञाने शक्त्यभावात् । धातूनामनेकार्थत्वस्यागतिकगतित्वेन गत्यन्तरसम्भवे तत्कल्पनस्यासङ्गतत्वात् । तथा भूम्नः सर्वात्मभावरूपत्वेन तस्य चेहालभ्यत्वेन सत्त्वशुद्धिमात्राप्राप्यत्वाद् भूम्नि निश्चिता स्मृतिरिति व्याख्यानमपि दुष्टमेवेति । अतः परं श्रुतिरेतस्य ज्ञानस्य यस्मैकस्मैचिद्देयत्वाभावायाऽऽह । तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमार इति । एतस्य भगवत्कृपया प्राप्यत्वेन सनत्कुमारस्य दर्शकत्वमुक्तं, न तु दातृत्वम् । ननु तर्हि कथं कथनमित्याकाङ्क्षायां तस्य कृपालुत्वमाह । तं स्कन्द इत्याचक्षते इति । योऽसौ वरदानेन शिवपुत्रोऽपि वृत्तस्तेन तथेत्यर्थः । समाप्तिद्योतनाय द्विरुक्तिः ॥

ननु आत्मादेशे, आत्मैवेदं सर्वमिति सर्वस्यात्मत्वेन भानश्रवणात् स्वात्मन्यपि तदभेदभानं भविष्यत्येव । भाते च तस्मिन् विरहभावप्रतिबन्धादुक्तरूपः सर्वात्मभावो ज्ञानमार्गीयज्ञानप्रतिबद्धो नोदेष्यतीतिचेत् । अन्तरा भूतग्रामवत् स्वात्मन इत्यधिकरणे भगवान् भजनानन्ददित्सयैतादृशं भावं सम्पादयति । तस्मात् तत्प्रतिबन्धं न करोतीतिप्रतिपादनात् । इदं प्रमेयप्रकरणे स्फुटीकरिष्यते ॥

स्यादेतत् । नात्र सर्वात्मभावो निरूप्यतेऽपि तु ज्ञानप्रकारविशेष एव । तथाहि । पूर्वप्रपाठके श्वेतकेतूपाख्याने सर्वस्यात्मना सहाभेदो निरूपितः । ऐतदात्म्यमिदं सर्वं, तत् सत्यं, स आत्मा तत्त्वमसि श्वेतकेतो इत्यनेन । अस्मिन् पाठके च, सोऽहं

भगवो मन्त्रविदेवास्मि नात्मविदिति नारदस्यात्मजिज्ञासैवोक्ता । एवञ्चोत्तरमपि तद्विषयकमेव भवितुं युक्तमित्यात्मप्रकरणत्वादुभयोः प्रपाठकयोः पूर्वस्मिन् पदभेद उक्तः । तस्यैव स्वरूपमात्मत एवेदꣳ सर्वमित्यन्तेनोक्तमिति पूर्वोक्तप्रकारादन्येन प्रकारेणात्माभेद एव सर्वेभ्योक्त इति । यथा पूजनप्रकरणे क्रियात्मकं बाह्यं पूजनं मानसव्यापाररूपमान्तरं पूजनं चोच्यते । नैतावताऽन्यतरस्य तद्भिन्नत्वं वक्तुमुचितम् । प्रकरणाभेदात् । तद्वत् प्रकृतेऽपि । किञ्च, नामरूपात्मकं जगत् पूर्वप्रपाठके, एतदात्म्यमिदं सर्वमिति सर्वशब्देन अनूद्य तस्मिन् ब्रह्माभेदो निरूपितोऽस्मिन् प्रपाठके तु ऋगादिर्विद्यां यद्वै किञ्चाध्यगीष्ठा इत्यादिनाऽनूद्य नामात्मकब्रह्मत्वं तन्नानिदिश्यते । नामैवैतन्नामोपास्स्वेत्यनेन । इतोऽपि हेतोर्ज्ञानप्रकारभेद एवात्रोच्यत इति । नैतत् साधु । सार्वात्मभावरूपाया मुख्यविद्याया एव निरूपणात् । सुखं त्वेव विजिज्ञासितव्यमित्युक्त्वा, यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखं त्वेव विजिज्ञासितव्यमित्युक्त्वा, यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति सुखस्वरूपकथनेऽक्षरपर्यन्तं गणितानन्दत्वेनाल्पतया, यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति निरवध्यानन्दमयस्य पुरुषोत्तमस्यैवात्र जिज्ञास्यत्वेन निर्द्धारणात् । ननु ज्ञानसामान्ये प्रसिद्धस्य विद्याशब्दस्य कथं ज्ञानकार्याविनाभूतासक्तिविशेषे सर्वात्मभावे शक्तिरिति चेन्न । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन * यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुतिरितरसाधनानिषेधपूर्वकं वरणस्यैव साधनत्वं विदधती वृतलभ्यत्वे हेतुं च वदन्ती वरणविषयमप्याह । तस्यैष आत्मा वृणुते तनुꣳ स्वामिति । तस्य वृतस्यात्मन एष भगवानात्मातस्तत्तनुरूपः स जीवा-

ऽऽत्मा तं तनुत्वेन वृणुते । तेन तद्वरणस्यावश्यकत्वाय स्वामिति।
एतेनान्तर्यामिब्राह्मणे, यस्यात्मा शरीरमित्यात्मत्वेन सकलात्मनां
तनुत्वात् कथं वृतस्यैव तत्तनुरूपत्वमित्याशङ्का निरस्ता वेदितव्या।
य आत्मानमन्तरो यमयतीति नियमनार्थमात्ममात्रस्य शरीरत्वश्र-
वणेन स्वकीयत्वनानुक्तत्वात् । अतः सर्वेषु शरीरत्वे साधारणे-
ऽपि यं स्वीयत्वेनालोचितवॉस्तमेव वृणुत इति । विवृणुत इति
पाठेऽप्ययमेवार्थः । ननु विवृणुत इति पाठेऽयमर्थोऽसम्भावितः।
विवरणपदस्य प्रकाशनार्थत्वात् । एवं, य वृणुते तस्य स्वां तनुं
प्रकाशयतीत्यर्थो भविष्यतीतिचेन्नैवम्।तस्मिन्नपि पक्षे तनुविवरण-
लिङ्गेनोक्तर्थस्याभावात् । तथाहि । सर्वेषां जीवानां तौल्येऽपि
यं वृणुत इति विशेषकथनाद्वरणीये कश्चिद्विशेषो विवक्षितः । स
च न जीवे साधारणशास्त्रजन्यः । पूर्वार्द्धासङ्गत्यापत्तेः । नापि
साधनाभावजन्यः। पामरादावपि तदापत्तेः । साधनशास्त्रवैयर्थ्या-
पत्तेश्च । अतोऽन्यथानुपपत्त्या भगवदालोचनजन्य एव वाच्यः ।
सोऽपि न ज्ञानिभक्तसाधारणः । भावभेदानुपपत्तेः । स्वं विवृणुत
इत्येतावतैव चारितार्थ्येन तनुपदवैयर्थ्यापत्तेश्च । ततस्तनुपदानुरो-
धात् साकारस्यैव प्रकाशो वक्तव्यः । स तु भक्तानामेवेति वरण-
विषयतया सुखेनैव भक्तो लप्स्यत इति । केचित्तु, यमेव परमा-
त्मानमेष विद्वान् वृणुते तं प्राप्तुमिच्छति तेन वरणेनैष परमात्मा
लभ्यो, नान्येन साधनेन। नित्योपलब्धस्वभावत्वात् । कीदृशो-
ऽसावात्मभाव इति । उच्यते । तस्यैष आत्मा अविद्यासंछन्नः
स्वां परा तनुम् आत्मतत्त्वस्वरूपं प्रकाशयति । घटादिरिव सा-
धको भवतीति मुण्डकश्रुतिं व्याचख्युः ।तथा, यमेव स्वात्मानमेष
साधको वृणुते तेनैवात्मना वरित्रा स्वयमात्मा लभ्यः । ज्ञानिमते
निष्कामश्चात्मानमेव प्रार्थयते । आत्मनैवात्मलाभ इत्यर्थः । कथं

लभ्यते इतिचेदुच्यते। तस्याप्तकामस्यैष आत्मा विवृणुते प्रकाशयति। पारमार्थिकीं तनुं स्वां स्वकीयामित्यर्थः, इति काठकश्रुतिं च व्याचख्युः। तदसङ्गतम्। तनुपदवैयर्थ्यात्। वरणीयवरितृोरभेदाङ्गीकाराद् व्याख्येयविरोधस्य स्फुटत्वाच्च। गीतायामपि, एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते * ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा इति प्रश्ने, मय्यावेश्य मनो ये मां नित्ययुक्ता उपासत इत्युत्तरेण। चतुर्विधा भजन्ते मामिति भजनमुपक्रम्य, ज्ञानी त्वात्मैव मे मत इति ज्ञानिभक्तस्यैवात्मत्वकथनेन। तपस्विभ्योऽधिको योगीति सन्दर्भे शुष्कज्ञान्यपेक्षया योगिन उत्कर्षमुक्त्वा, श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति भक्तोत्कर्षकथनेन चाऽस्मदुक्तार्थस्यैवोपोद्बलनाच्च। अतो विवरणपदस्य प्रकाशनार्थकत्वपक्षेऽपि तनुप्रकाशलिङ्गेन भक्तस्यैव वरणविषयत्वं निश्चीयते इति तेष्वेव स्वीयत्वं सिद्ध्यतीति न पूर्वोक्तप्रकारे कश्चिद् दोषः। ननु वरणश्रुतेरन्यत्र धर्मादन्यत्राधर्मादन्यस्माच्च कृताकृतात् * अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यति तद्वदेति प्रश्ने, सर्वे वेदा यत्पदमामनन्तीत्यादिनैतद्ध्येवाक्षरं ब्रह्मेति प्रकृत्य काठके पठनान्मुण्डके चाथ परा यया तदक्षरमधिगम्यत इत्यक्षरमेवोपक्रम्य पठनाच्च पुरुषोत्तमप्रकरणस्य कुत्राप्यदर्शनात् कथं भगवत्परत्वमस्या इतिचेत्। नैवम्। परस्यैव वेदवेद्यत्वेन कथनात्। तथाहि। अन्यत्र धर्मादिति प्रश्नस्य, सर्वे वेदा इति प्रत्युत्तरे, नायमात्मेति श्रुत्या पुरुषोत्तमप्राप्तिसाधनं तपआदिकमत्र, न मेधयेति निषेध्यत्वेन कथमुच्यत इत्याशङ्कावारणायैतद्ध्येवेतिमन्त्रद्वयेन अक्षराभेद उक्तः। तथाचाक्षरस्य पुरुषोत्तमाभिन्नतयैवेति न श्रुतिविरोध इति भावः। ततस्तदुपासकस्वरूपमाह। अजो नित्य इति मन्त्रद्वयेन। अग्रे च विरुद्धधर्माधिकरणं तत्प्राप्यपुरुषोत्तम-

स्वरूपमाहाणोरणीयानित्यादिनेति पुरुषोत्तमस्यैव प्रकृतत्वम् । ब्रह्मविदाप्नोति परमिति श्रुत्येकवाक्यतयाऽयमर्थोऽध्यवसीयते । अक्षरस्य ब्रह्माभिन्नत्वपक्षे ब्रह्मवित्पदेनैतादृशज्ञानस्यापि संग्रहात् । यद्वा, वेदवेद्यत्वं वाच्यवाचकाभेदविवक्षया प्रणवे वक्तुमक्षरपदेन ओमित्येतदिति पूर्वोक्तं प्रणवं परामृष्य तत्र ब्रह्मत्वमुपासनासाधनत्वाय विधाय, ततोऽजो नित्य इति मन्त्रद्वयेनोपासकस्वरूपमुक्त्वा, अणोरणीयान्महतो महीयानित्यादिमन्त्रत्रयेण विरुद्धधर्माश्रयत्वादिकमुक्त्वा तज्ज्ञानाय, यमेवैष वृणुते, नायमात्मेति पठ्यते इति पुरुषोत्तमस्यैव प्रकृतत्वं काठके। तथा मुण्डकेऽपि प्रथमे मुण्डके यत्तदद्रेश्यमग्राह्यमित्यादिना सर्वकारणत्वेनाक्षरः प्रस्तुतः । द्वितीये यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा इत्यादिना ततः सजातीयविजातीयसृष्टिमुक्त्वा, दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः पर इत्यनेन पूर्वोक्ताक्षरपरः पुरुषोत्तम उक्तः । तृतीयेऽपि द्वा सुपर्णेत्यनेनान्तर्यामितया तमेव परामृष्य ततो, जुष्टं यदा पश्यत्यन्यमीशमित्यादिना तद्दर्शनफलमुक्त्वा ततो ध्यातुः स्वरूप, एषोऽणुरात्मेत्यनेनोक्त्वा मनोरूपं करणं चोक्त्वा ततो, यमित्यादिना तत्स्वरूपं फलतो निदर्श्य अक्षरात्मकविभूतिकामस्य तदर्चनमुक्त्वा ततः, स वेदेत्यनेन ब्रह्मलोकाक्षरप्राप्तिमुक्त्वा, कामान् यः कामयत इत्यनेन सकामनिन्दनं कृत्वा पर्याप्तकामस्याक्षरवेत्तुर्भक्त्या भगवत्प्रसादुर्लभत्वे तत्र सर्वकामलयमुक्त्वा ततस्तादृशात्मानं ज्ञानप्रसादेऽपि स्वसामर्थ्येन न पश्यति, किन्तु तत्सामर्थ्येनैवेति वक्तुं, नायमात्मेति पठ्यत इति पुरुषोत्तमस्यैव प्रकृतत्वं सिद्ध्यतीति । इदमुपबृंहितं गीतायां, द्वाविमौ पुरुषौ लोक इत्यारभ्य प्रथितः पुरुषोत्तम इत्यन्तेन । अक्षरपदस्य प्रकृष्टवाचकत्वमक्षरस्य पुरुषोत्तमभेदाभेदौ प्रमेयप्रकरणे व्युत्पाद्यम् । एतदग्रे च

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गादिति श्रुतिर्भक्तिमार्गीयवरणं स्वीयत्वेनाङ्गीकाररूपमेव, न त्वन्यादृशमपीति ज्ञापयितुं पठ्यते । ततोऽयमर्थः । बलं भक्तिस्तद्धीनेन नायमात्मा लभ्यः । न साधयति मां योगो न सांख्यं धर्म उद्धव * न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥ अहं भक्तपराधीनः, वशे कुर्वन्ति मां भक्त्येत्यादिवाक्यैर्भक्तेर्भगवद्वशीकारकत्वबोधनाद्वशीकारस्य बलकार्यत्वात् । अन्यथोत्तरार्द्धगतैवकारेण वरणातिरिक्तयावत्साधनानामसाधकत्वावगमेऽपि पुनर्बलाभावं न निषेधेत् । बलस्य च तथात्वं वरणमात्रस्य हेतुत्वमुक्त्वा न वदेदतो बलं भक्तिः । नच बलशब्दस्य शरीरसामर्थ्ये शक्तत्वेनात्र तत्प्रयोगस्य भाक्तत्वमिति, आत्मनिष्ठाजनितवीर्यादिरूपमेव बलं विवक्षितमिति वाच्यम् । बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् * या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवलमिति वाक्ये भ्रूविजृम्भसामर्थ्येऽपि तथा प्रयोगदर्शनेन कार्यादिशब्दवदस्यापि सापेक्षवृत्तिकत्वात् सामर्थ्यरूपत्वमादाय तथा प्रयोगाद्भाक्तत्वगन्धस्याप्यभावात् । यद्यप्यहं भक्तपराधीनः, वशे कुर्वन्ति मां भक्त्येति वाक्ये गुणावतारस्य विष्णोर्न तु भगवतस्तथापि, न साधयति मां योगो न सांख्यमिति वाक्यैकवाक्यतयेहोपन्यस्ते। गुणावतारे तु मूलधर्मसमानधर्मताबोधानायेति ज्ञेयम् । एवं चाग्रे प्रमादालिङ्गतपसोर्निषेधेनाप्रमादसलिङ्गतपसोः सहकारित्वं बोधितम् । तत्राप्रमादो भगवदिच्छानुरूपसेवाकरणादिरूपः । तपस्तु सर्वात्मभावसहितविरहभावरूपं ज्ञेयम् । अन्यस्य, नाहं वेदैर्न तपसेति निषेधात् । उत्तरार्द्धे च, एतैरुपायैर्यतते यस्तु विद्वाँस्तस्यैष आत्मा विशते ब्रह्म धामेति पठ्यते । तस्यैवं यतमानस्यैष पूर्वोक्त आत्मनोऽप्यात्मा पुरुषोत्तमः, ब्रह्म अक्षरात्मकम् एतदाधिदैविकं

धाम विशते प्रविशति । तदृध्वर्येऽक्षरं प्रकाश्य स्वयं तत्र प्रतिष्ठत्वेन प्रकाशत इत्यर्थः । तैत्तिरीये च, ब्रह्मविदाप्नोति परमित्यस्य विवरणर्चा हृदयाकाशे निहितं परमं व्योमाक्षरात्मकं तत्र ब्रह्मणा सह सर्वकामोपभोगरूपफलं परमाप्तिपदार्थत्वेन विव्रियते । एवञ्चैतच्छ्रुत्येकवाक्यतया वरणजन्या ज्ञानाविनाभूता व्यमनात्मिका या सर्वात्मभावरूपा भक्तिः सैव मुख्या ब्रह्म विद्यात्र भूमात्मकपुरुषोत्तमस्य जिज्ञास्यत्वेनावधारणादवसीयत । तथा सति श्वेतकेतूपाख्याने, परोक्षवादो वेदोऽयमिति वाक्यात् परोक्षवादेन सर्वस्य जगतो जीवस्य च ब्रह्माभेदो यो बोध्यते स पुरुषोत्तमाधिष्ठानत्वयोग्यताबोधनाय । अग्रे च, न ह्येतावतैव पुरुषोत्तमाऽधिष्ठानात्मकाक्षरप्रादुर्भावो भवति, पुरुषोत्तमस्य वा । तथा सति ज्ञानिभिरपि परः प्राप्येत । न त्वेवम् । यमेवैष वृणुत इत्यादिश्रुतिभिः । किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यामिति ज्ञापनाय भक्त एवाधिकारीत्यपि ज्ञापयितुं भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च संवाद उक्तः । तत्रात्मशब्देन भक्तिमार्गे पुरुषोत्तम एव निरुपाधिस्नेहविषयो यतस्ततः स एव उच्यते, न त्वक्षरं, जीवो वा । पुरुषोत्तमस्तु सर्वात्मभावैकसमधिगम्य इति सर्वात्मभावरूपा भक्तिरेव विद्यापदवाच्येत्युक्तं चैतत् । परमकाष्ठापन्नं यद्वस्तु तदेव वदान्तेषु मुख्यतया प्रतिपाद्यम् । अक्षरब्रह्मादिकं तु तद्विभूतिरूपमिति तदुपयोगित्वेन मध्यमाधिकारिफलत्वेन च प्रतिपाद्यते । तेनाथ परा यया तदक्षरमधिगम्यत इत्यक्षरविद्यायां परविद्यापदप्रयोगो भाक्तः । एवं सति पूर्वप्रपाठकस्याक्षरप्रकरणत्वादुत्तरस्य पुरुषोत्तमप्रकरणत्वात् त्वदुक्तस्य प्रकरणैक्यरूपस्य भवदभिमतात्मविद्याप्रकारविशेषतासाधकस्य हेतोरेवासिद्धिरिति दूरे निरस्तो ज्ञानप्रकारभेदः । न

च शाखान्तरीयवाक्यस्य कथमेतच्छेषत्वमिति भ्रमितव्यम् । हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तमिति सूत्रे कुशाच्छन्दःस्तुत्युपगानवदिति दृष्टान्ते, कुशावानस्पत्येति वाक्यशेषत्वमौदुम्बर्यः कुशा इति शाट्यायनिवाक्ये सर्वैर्भाष्यकारैरादृतमिति जैमिनिना च बाधलक्षणे, नानुयाजेष्विति वाक्यस्य, ओश्रावयास्तु श्रौषट्, ये यजामहे वषडिति दूरस्थवाक्यशेषत्वमादृतमिति नात्र शङ्कालेशः। सूत्रार्थस्तु फलप्रकरणे वक्तव्यः। एवं प्रकरणभेदे सिद्धेऽतिदेशोऽप्यकिञ्चित्कर एव । अतिदेशमात्रेण तद्वाक्यान्तरभेदस्य क्वाप्यसिद्धत्वात् । किञ्च, दृश्यते च व्रजभीमन्तीनीप्रभृतीनां पूर्वमितरनिस्मृतिः । भगवत्स्पर्शादिनाग्रे सर्वसामर्थ्यमिति । उक्तं च, चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युतकरावपि गृह्यकृत्ये * पादौ पदं न चलत इत्यादिना। तेन ज्ञानशक्तिक्रियाशक्तितिरोधानमुक्तं भवति। अग्रे भगवदाविर्भावादिकं स्पष्टमेव । ननु मास्त्वस्य पूर्वप्रकरणशेषत्वम् । तावताप्यस्य प्रपाठकस्यान्तमेकवाक्यत्वं तु विषयभेदाभावान्निःसन्दिग्धम् । तत्रोपक्रमे, मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामीत्यादिना स्वात्मज्ञानस्यैवोपक्रमादुपसंहारोऽपि तमादायैवोचितः।अग्रे वेदात्मपदानामीश्वरपरत्वं स्याद्वाक्यभेद उपक्रमविरोधश्च स्यात्।तस्माद्वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेष एवायमिति चेन्नैष दोषः।श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्राद्वाक्यापेक्षया श्रुतिलिङ्गयोर्बलिष्ठत्वात्। तथाहि। आत्मबोधकस्य तस्यैकवाक्यत्वेऽपि उपक्रमस्य बलीयस्त्वेऽपि नात्मशब्दो निःसन्दिग्धः। जीवाक्षरपुरुषोत्तमसाधारण्यात् ।तथा सति को वा तत्र ग्राह्य इति विमर्शे शोकतारको यः स एव वक्तव्यः।नारदस्य शोकतारका-

ऽऽत्मज्ञानार्थमुपसन्नत्वात् । तादृशश्च पूर्णानन्दत्वात् पुरुषोत्तम एव, न जीवो नाप्यक्षरम् । आद्यस्य दुःखित्वादन्यस्य गणितानन्दत्वात् । अतो निरवधिसुखरूपात्मत्वाभिधायिका भूमश्रुतिः । श्रुतमात्रस्यैवेतरनिरपेक्षस्य भूमपदस्य निरवध्यऽमृतसुखप्रमितिजनकत्वात्। यमेवैष वृणुते इतिश्रुतिर्वरणमात्रलभ्यत्वमाह । नायमात्मा बलहीनेन लभ्य इति श्रुतिर्भक्तिलभ्यत्वमाह । भक्त्यादिकं वरणव्यापार इत्यदोषः । तथा, नात्मवित्, तरति शोकमात्मविदिति नारदवाक्ये, अथात आत्मादेश इत्यादितदुत्तरे च यदात्मपदं तदपि, भूयो भूय इत्युत्कृष्टप्रश्नतदुत्तराभ्यां सर्वोत्कृष्टे पुरुषोत्तमे पर्यवस्यत् तस्यैव लिङ्गम्। अत एव भूमश्रवणानन्तरम्, अस्ति ततोऽपि भूय ! इति नापृच्छत्, किन्तु तत्प्राप्त्यर्थमुपायं, स भगवः कस्मिन् प्रतिष्ठित इत्यपृच्छत् । तदा सर्वात्मभाववतस्तत्रैव प्रतिष्ठित इत्याशयेन सर्वात्मभावलिङ्गात्मकं भावं, स एवाधस्तादित्यादिनोक्तवान् । तथाचैताः श्रुतयः स्वसामर्थ्येन तस्य सुखस्य वरणलभ्यत्वभक्त्यादिबललभ्यत्वसर्वात्मभावलभ्यत्वप्रमितिं जनयन्त्यो लिङ्गरूपा इति । ननु नैतया श्रुत्या सर्वात्मभावलिङ्गात्मको भाव उच्यतेऽपि तु व्यापकत्वेन सर्वरूपत्वेन स्वाभिन्नाभावादन्यत्राप्रतिष्ठितत्वमेवोच्यते। अन्यथा स्वप्रतिष्ठत्वं भज्येतेतिचेन्न । भूमस्वरूपश्रवणानन्तरं तदाधारप्रश्नात्, स्वे महिम्नीत्युत्तराच्च ।

अर्थस्तु, स्वपदस्यात्मीयवाचकत्वे स्वीयत्वेन वृते भक्त यो महिमा सर्वात्मभावरूप उत्कर्षस्तस्मिन्निति स्वपदस्यात्मवाचकत्वे स्वरूपाऽऽत्मके महिम्नीति।अत्रापि सर्वात्मभावस्य भगवदात्मकत्वात् स एव महिमा । न च स्वरूपात्मके महिमत्वं विरुद्धमिति वाच्यम्धर्मत्वेऽपि धर्मिरूपत्वस्य,प्रकाशाश्रयवद्वा तेजस्त्वादितिसूत्रभाष्ये प्रतिपादनात् वक्ष्यते च प्रमेयप्रकरणे । स च विप्रयोगभावोदये सम्यग्ज्ञातो भव-

ति व्यभिचारिभावैः।ते त्वनियतस्वभावा इति ज्ञापयितुं तदादेशाहङ्कारादेशात्मादेशरूपास्तिस्रो त्रिधा निरूप्य भूमप्रतिष्ठाऽधिकरणप्रश्ने यदुत्तरितं, स्वे महिम्नीति तमेवानुबध्नाति, स वा एष इत्यनेन। तच्छब्दस्य पूर्वपरामर्शित्वात् । एवं सति त्वदुक्तमन्यत्राप्रतिष्ठितत्वं चेदिह प्रतिपाद्यं स्यात्तदोक्तरीत्याऽनुबन्धं न कुर्याद्, अहङ्कारादिकं च न कुर्यात् । उक्तप्रश्नोत्तरं, स्वान्यवस्त्वभावाद्, न क्वापीत्येव वदेत् । स वा एषेत्यस्यायमर्थः । पूर्वप्रतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यतीत्येतद्दर्शनमेवं पश्यन्नित्यनेनोच्यते ततः किञ्चिद्बाह्यानुसन्धानेऽहङ्कारादेशो भवति ।

पूर्वश्रुताविव सर्वत्र सर्वरूपतया स्वस्यैव भावात् । तदा स्वबले स्फुरितेऽहमेव सर्वैः प्रकारैः स्वसामर्थ्येन तं प्रकटीकरिष्य इति युक्तिभिरनुचिन्तयतीत्येतदेव, मन्वान इत्यनेनोच्यते।तथाच, स वा एष एवं पश्यन्नहङ्कारेणैवं मन्वान इत्येतद्भगवदादेशमनुवर्त्य योजना। तेन व्रजरत्नानामिव अन्वेषणगुणगानादिकरणावस्था ज्ञापिता भवति । ततो निरुपधिस्नेहविषयः परमात्मा पुरुषोत्तम एवेति तन्निर्देशो भवति । ततः पूर्ववत्तस्यैव सर्वात्मकत्वे भाते स्वकृतसाधनवैफल्यज्ञानेनातिदैन्ययुक्तस्वाभाविकस्नेहजविविधभाववान् भवतीत्यतद्विजानन्नित्यनेनोच्यते।एवञ्चाहङ्कारेण पूर्वोक्तरीत्या आत्मज्ञानात् पुरुषोत्तमस्य भावे स्नेहे सदैन्ये जाते विविधेषु जातेषु भावेषु च विधान्तरेण स्नेहादिविशिष्टंपुरुषोत्तमंजानन्नित्यात्मादेशनं कृत्वा, ततोऽतिदैन्यतो जाते भगवदाविर्भावे या अवस्थास्ता, आत्मरतिरात्मक्रीड इत्यादिनोच्यन्ते इति । अत्र आत्मशब्दः पुरुषोत्तमवाचको ज्ञेयः। अन्यथौपचारिकत्व स्यात् । मुख्ये सम्भवति तस्यायुक्तत्वात् । नन्वस्तूक्तयुक्तिरत्र सर्वात्मभावस्तथाप्यत्र सर्वग्रन्थिप्रविमोक्षस्यैव फलत्वेन कथनात्तस्य च, भिद्यते हृदयग्रन्थि-

रिति श्रुत्यन्तरात् परावरदर्शनस्य यत्फलं तस्यैव ग्राह्यत्वात् तस्य च, तमेवं विद्वानमृत इह भवतीत्यादिश्रुत्यन्तरेषु मुक्तिरूपस्यैव सिद्धत्वादस्य भावस्य मुक्तावेव पर्यवसानात् फलतो न कश्चिद्विशेषः । अतस्तत्फलं, न तदोक्तफलवाक्यविरोध इत्युभयतःपाशारज्जुरितिचेन्नैवम् । ज्ञानफलातिरिक्तफलजनकत्वात् । तथाहि । यथा मुमुक्षुभक्तप्रज्ञा स्वेष्टदातृत्वेन भगवद्विषयिणी मोक्षमेव साधयति । न तु ज्ञानकर्मवदितरभक्तप्रज्ञाजन्यम् । तथा सर्वात्मभाववद्भक्तस्य यत्प्रकारिका भगवद्विषयिणी प्रज्ञा तमेव प्रकारं स भावः साधयति । स प्रकारो न मुक्तिदातृत्वरूपः । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इति वाक्यात् । किन्तु भगवद्दर्शनादिविषयस्वरूपः । नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः * येऽन्योन्यतो भागवताः प्रसह्य सभाजयन्ते मम पौरुषाणि ॥ पश्यन्ति ते मे रुचिराण्यम्ब सन्ति इत्यादिवाक्यात् । जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि * दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते इत्यादिवाक्याद्वा । प्रमाणं त्वत्र, अहं भक्तपराधीन इत्युपक्रम्य, वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथेति । यो हि यद्वशीकृतः स तदिच्छानुरूपमेव करोत्यतो न सायुज्यादिदानं, किन्तु भजनानन्ददानमेवेति । नच फलोक्तिविरोधः शङ्क्यः । दर्शनस्य प्रागेव जातत्वेनाऽविद्याकामजन्यहृदयग्रन्थीनां भेदस्य पूर्वमेव वृत्तत्वादत्र ततोऽतिरिक्तस्यैव फलस्य विवक्षितत्वेनाविरोधात् । यद्वा । ज्ञानमार्गे भगवद्दर्शने हृदयग्रन्थिभेदनं नानाविधवृत्त्यनुदयरूपम् । भक्तिमार्गे तु सर्वग्रन्थीनां प्रविमोक्षो भगवद्विषयकनानावृत्त्युदयेऽपि आमोक्षमनिष्टभानरूप इति मार्गभेदात् तत्क्रतुन्यायेन फलभेद इति विरोधाभावात् ॥

ननु नानेन प्रकारेण सर्वात्मभावः प्रतिपत्तुं शक्यते । आमोक्षं कामनाशून्यस्यात्र तस्य सर्वेषु लोकेषु कामचारो भवतीति तत्तल्लोककामनाश्रवणादिति चेत् । नैवं वक्तुं युक्तम् । विविधानां लोकानां विविधसुखप्रधानत्वाद्भगवत्संम्बन्धि सर्वेषु सुखेषु कामचारो भवतीति श्रुत्यर्थात् । अजामेकां लोहितकृष्णरूपां, रूपंरूपं प्रतिरूपो बभूव, आदित्यो वै देवमधु, वाचं धेनुमुपासीतेत्यादिश्रुतिषु समानधर्मयोगादपि तच्छब्दप्रयोगदर्शनात् । श्रुत्यर्थस्तु प्रथमाऽध्यायचतुर्थपादे, चमसवदविशेषादित्यधिकरणे स्फुटः । ननु यथाश्रुत एवास्त्वर्थः, किं बाधकम् । किञ्च लोकपदेन शक्त्या लक्षणया वा सुखमुपस्थाप्यत इति वाच्यम् । तयोस्तु ब्रह्मसुखस्य लोकासम्बद्धत्वादसम्भव इति चेन्न । सर्वात्मभाववतो, नान्यत् पश्यतीत्यादिनाऽन्यदर्शननिषेधस्यैव लोककामनायां बाधकत्वात्। आत्मन एवेदꣳ सर्वमित्येनकारेणाऽऽत्मव्यतिरिक्तप्रापञ्चिकसर्वनिषेधेनापि लोकसम्बन्धस्याशक्यशङ्कत्वाच्च । किञ्च, सुखे लोकपदस्य शक्त्यसम्भवेऽपि लक्षितलक्षणायाः सम्भवात् । द्विरेफादिपदवत् । कल्पनोपदेशाच्च मध्वादिवदविरोध इति सूत्रभाष्ये श्रुतिषु वृत्तिवत् समानधर्मोऽप्यर्थोपस्थापक इत्युक्तम्।शक्त्यतिरिक्तवृत्त्यनङ्गीकारात्। तथाचाप्रसिद्धशक्त्या सुखोपस्थितिरिति फलति॥

स्यादेतत् । सुखस्वरूपजिज्ञासायां, यो वै भूमा तत् सुखमिति वदता, यत्र नान्यत् पश्यतीत्यादिना भूमस्वरूपमभाणि । स चेन्न सर्वात्मभावो भवेत् तदा विरहभावे दुःसहदुःखानुभवस्य स्मरणात् सुखरूपता न भवेत् । तर्हि, यो वै भूमा तदमृतमिति न वदेत् । तस्मान्मोक्षसुखमेव, यो वै भूमेत्यादिना वाच्यम् । नच मोक्षानन्तरं सर्वलोकेषु कामचारो न संभाव्यतेऽतो नात्र मोक्षसुखमिति वाच्यम्। कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यनिरू-

पणार्थत्वादमृतशब्दाच्च मोक्षनिश्चयात् । किञ्च, लोकेऽपि शृङ्गाररसभावत्वाति पुंसि नार्यां चैतादृशाव्यभिचाराभावः स्यात् लौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यमिति । अत्रोच्यते । दुःखहेतुत्वेऽप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वात् । तथाहि । तैत्तिरीयके दर्शपूर्णमासप्रकरणे परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छदित्युपक्रम्य, य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छतीत्यत्र व्रतादिदुःखात्मकत्वेऽपि परमकाष्ठालक्षणफलत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्योऽधिकत्वं वक्तुमग्र आसीदिति स्तूयते । तद्वत् प्रकृतेऽपि । किञ्च, रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुत्या रसरूपत्वमुच्यते । स च मुख्यत्वाच्छृङ्गारो भक्तिरसो वा भवितुमर्हति । तत्र शृङ्गारस्य संयोगविप्रयोगात्मत्वम् । श्रुतिरपि, स एवाधस्तादित्यादिना सर्वात्मभावमेव वक्ति । यदि भूमपदेन मोक्षमभिप्रेयात्तदैवम् आत्मादेशाहङ्कारादेशात्मादेशरूपां त्रिविधां वृत्तीर्न वदेत्, प्राणाशास्मरादिसम्बन्धं च न वदेत् । मुक्तस्य वृत्तिभेदाभावात् । प्राणाद्यभावाच्च । अथ जीवन्मुक्तस्य तदापि, आत्मतः प्राणा इत्यादि न वदेत् । तस्य प्रारब्धवशादेव प्राचीनप्राणादीनां सत्त्वात् । अतस्तदन्यथाऽनुपपत्त्या सर्वात्मभाव एवोच्यते । यदप्युक्तं, लोकेत्यादि । तत्राप्युच्यते । न हि लोकसत्ताकत्वं लौकिकताप्रयोजकम् । ब्रह्मणो लौकिकत्वापत्तेः । अत एव न लोकसम्बन्धित्वं तथा । तस्य सम्बन्धस्य ब्रह्मणि सत्त्वात् । नापि लौकिकसादृश्यं तथा । ब्रह्मज्ञानस्य तथात्वापत्तेः । किन्तु लौकिकप्रमाणमात्रप्राप्त्यत्वमेव तथा । तथाचोक्तप्रमाणसिद्धस्य सर्वात्मभावस्य न लौकिकत्वमिति । भाष्यप्रकाशे त्वनुमानमुक्तम् । सर्वात्मभावो लौकिकसदृशत्वेऽपि न लौकिकः । अलौकिकप्रमाणप्राप्यत्वात् । लौकिकप्रमाणाप्राप्-

त्वाच्च । यागीयदोहनाधिश्रयणादिवत् । यन्नैवं तन्नैवम् । लौकिकसद्वदिति । वस्तुतस्तु शङ्केयम् अविचारकस्यैवोदेति, न तु विचारकस्य । वात्स्यायनादिऋषिभिर्भगवद्भक्तभावभावनार्थं शास्त्रप्रणयनात् । न तु ऋषीणां लौकिके तात्पर्यं भवितुमर्हति । अन्यथा वात्स्यायनः कामसूत्रसमाप्तौ, तदेतद् ब्रह्मचर्येण परमेण समाधिना * विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः ॥ रक्षन् धर्मार्थकामानां स्त्रीन् सम्पश्यँल्लोकवर्त्तिनाम् * अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रिय इत्येतच्छास्त्रतत्त्वज्ञस्य जितेन्द्रियभवनरूपं फलं न वदेत् । एवं भरतोक्तगीतशास्त्रेऽपि बोध्यम् । उपवेदत्वादित्यलं पल्लवितेन । अयमर्थो लिङ्गभूयस्त्वाधिकरणे, भूम्नः क्रतुवज्ज्यायस्त्वाधिकरणे च सिद्धः । ननु तर्कस्य स्पष्टत्वं न । भक्तेरपि योगे वियोगवृत्तिः प्रेमेति सूत्रेणापि संयोगविप्रयोगात्मकत्वेन विरहभावस्य दुःखरूपत्वेन कथं भगवत्त्वमिति चेन्नैवमपि । भगवद्धर्मत्वेन दोषाभावात् । तदुक्तम्, अस्यैव चोपपत्तरूष्मेति सूत्रभाष्ये । तथाहि "अस्यानन्दात्मकरसरूपस्य भगवत एवायं धर्मः । ऊष्मा विरहतापः । व्यापकस्य भगवतः सर्वत्र सत्त्वेऽपि मायया तिरोधानात्तद्विरहः सर्वसाधारणस्तथापि, न सर्वाऽनुभवगोचरोऽपि तु यस्य हृदि रसरूपभगवदाविर्भावो भवति तस्यैव तदप्राप्तिजतापानुभवो गोचरीभवतीत्यन्वयव्यतिरेकरूपोपपत्तेः । तथाच रसरूपस्य वस्तुन एव तथात्वात् स तापोऽपि रसात्मक एवेति । अथ यदि, न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतामिति श्रुत्या तादृशभक्ते दुःखादिकं निषिद्ध्यत इति तत्र तस्याऽशक्यवचनत्वं विभाव्यते तदा शारीरसम्बन्धिमृत्युरोगादिप्रायपाठपठिते दुःखे कर्मजन्यत्वं विशेषणमिति वाच्यम् । तथाच विरहस्य कर्माजन्यत्वान्न तन्निषेधः । अन्यथाऽस्य दुःखत्वेन कर्मजन्य-

त्तापस्या मोक्षसुखमपि विप्लूयेत । नच तत्र लौकिकत्वस्योपाधित्वं तदा स्याद्यदि सुखत्वद्भगवद्विरहतापस्यापि कर्माजन्यत्वं प्रमाणसिद्धं स्यात् । न त्वेवमनुलब्धेरितिचेन्न । रसो वै सः, रस९ ह्येवायं लब्ध्वानन्दी भवति, एष ह्येवानन्दयातीति श्रुतौ रसरूपभगवत्स्वरूपलाभे तस्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वकथनं मरणहेत्वनुपस्थितावनुपपन्नं सन्मरणहेतुभूतं दुःखमुपस्थापयति । येन विना यदनुपपन्नमिति न्यायात । तच्च रसप्रकरणाद्विरहरूपमेवेति । अग्रे च विरहभावस्यान्योपमर्दित्वेन प्राणस्थितिरपि न स्याद् यदि रसात्मको भगवान् हृदि न स्यादित्याशयवती, को ह्येवान्यादिति श्रुतिः । एष हृदि स्फुरद्रूप आकाशो भगवान्न स्यात, कस्तदाऽन्यात को जिवयेद् । न कोऽपीत्यर्थः । को वा तदवस्थायामवस्थापयेन्न कोऽपीति चार्थः। तापात्मकस्यापि आनन्दरूपत्वमिति ज्ञापयितुमानन्दपदम् । अन्यथा विरहदशायां हृदि स्फुरत आनन्दत्वं न वदेत । तदा प्रलापगुणगानादयोऽपि विप्रयोगात्मकभगवद्धर्मा एव । तदनन्तरं प्रकटीभूय तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपाऽऽनन्ददानेन अन्यात पूर्वतापानिवृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः । ननु कथमयमेव श्रुत्याशय इति ज्ञायते इति चेदित्थम्। रस९ ह्येवायं लब्ध्वानन्दीभवतीति पूर्वश्रुत्यैवान्यव्यवच्छेदपूर्वकभगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत्पुनराह तत्रापि व्यतिरेकमुखेन तत्रापि जीवहेतुत्वं, तदपि सामान्यविशेषाभ्यां वारद्वयं, तेन विरहसामयिक उक्तरूप एवार्थः श्रुतेरिति निश्चीयते । अन्यथा पुनरुक्तिः स्यादिति । तस्माद्विरहस्य भगवद्धर्मत्वं श्रौतमिति कर्माजन्यत्वसिद्ध्या लौकिकत्वस्योपाधित्वं दुरपोहमिति । किञ्च, श्रीभागवते तद्भावस्य स्मरणहेतुत्वं, तेनैव जीवन तस्य ब्रह्मादिदुरापत्वं च स्मर्यते। ता मन्मन-

स्का मत्प्राणा मदर्थे त्यक्तदैहिकाः * ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमित्युपक्रम्य, धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चनेत्यादि। उद्धवस्य तत्सामयिकवचनं, चैताः परं तनुभृतो वरगोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः * वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्येति। गायन्त उच्चैरिति श्लोकटिप्पण्यां तु तद्वार्त्तानभिज्ञस्य तवेयमाशङ्का-कण्टकवेधदृष्टान्तेन कामिनीकुचकुम्भे नखवेधस्यापि दुःखहेतुत्व-मनुहरतीत्यलमुक्त्येति उक्तम्। तस्मान्नात्र संशयः। अत एव कस्यचित्, सङ्गमविरहविकल्पे वरमिह विरहो, न सङ्गमस्तस्याः * सङ्गे भवति यदेका विरहे पुनरेव सर्वस्वमिति। एवं भरतोक्त-सङ्गीतशास्त्रेऽपि बोध्यमुपवेदत्वादित्यलं पल्लवितेन। अयमर्थो लिङ्ग-भूयस्त्वाधिकरणे सिद्धः॥

ननु तावता कथं भक्तौ शास्त्रपर्यवसानमितिचेत्। उच्यते। समन्वयाध्याये वाक्यान्वयाधिकरणे, बृहदारण्यकस्य चतुर्थाध्या-यस्य चतुर्थे ब्राह्मणे, षष्ठाध्यायस्य पञ्चमे ब्राह्मणे च याज्ञवल्क्य-मैत्रेयीसंवादे, येनाहं नामृता स्यां किं तेन कुर्याम्? इति प्रश्ने विरक्तिमुक्त्वा, यदेव भगवान् वेद तदेव मे ब्रूहीति पृष्टस्तामभि-मुखीकृत्य, न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवतीत्यादिना अमृतत्वाय ज्ञानमुपदिष्टवान्। षष्ठे पुनरुपसंहारेऽपि, एतावदरे खल्वमृतत्वमितिहोक्त्वा प्रवव्राजे-त्युक्तम्। तत्र ज्ञानविषयत्वेनोपदिश्यमान आत्मा जीवो ब्रह्म वेति सन्दिह्य तत्रात्मनः प्रियत्वं स्वप्रतीत्या पुत्राद्यपेक्षया बोधय-ञ्जीवमेवात्मत्वेन वदति याज्ञवल्क्यः। अग्रे च तस्यैव दर्शना-दि विधत्ते। तद्दर्शनादिनैव सर्वज्ञानरूपफलमाह। तत्रात्मज्ञानेन कथं सर्वं ज्ञातं भवतीत्याकाङ्क्षायां, ब्रह्म तं परादादित्यादिना इदं

सर्वं यदयमात्मेत्यन्तेन तस्य सर्वत्वमाह । अर्थस्तु, ब्रह्मक्षत्रादिवर्णाभिमानिनी देवता, तं वक्ष्यमाणलक्षणं पुरुषं परादात् ज्ञानात् पराकुर्यात् । कोऽपराध इत्याकाङ्क्षायामाह । योऽन्यत्रात्मनो ब्रह्म वेदेति । तथाचागमात्मभिन्नत्वेन मा पश्यतीत्यपराधात् तम् आत्मज्ञानरहितं कुर्यात् । ततः कथमस्मिन् ब्रह्मज्ञानं सञ्जातं भवतीत्याकाङ्क्षाया दुन्दुभिवीणाशङ्खदृष्टान्तानाह । यथा दुन्दुभेर्हन्यमानस्य बाह्याञ्छब्दान्न शक्नुयाद् ग्रहणाय, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इत्यादिना । अर्थस्तु, दुन्दुभेर्हन्यमानस्य सकाशाद् बाह्यानतिरिक्ताञ्छब्दान् महाकोलाहले ग्रहणाय ग्रहीतुं न शक्नुयात्, किन्तु हन्यमानस्य दुन्दुभेरेव शब्दो गृहीतो भवति । तत्र करणत्वं दुन्दुभिदर्शनस्य तदाघातदर्शनस्य वा । तदेतदुक्तं, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वेति । तथाच महाकोलाहलाभिभावके कस्मिँश्चिच्छब्दे श्रुते कस्यायमिति जिज्ञासायां योग्यतया सजातीयशब्दान्तरेण वा कारणमनुमिनोति । एवमनुमानेन तत्र चित्ते निविष्टे ततः प्रयत्नेनान्यथा च स दुन्दुभिं साक्षात्करोति । तथात्मबुभुत्सायामात्मबोधकानि यानि चेष्टादिरूपाणि तत्कार्याणि तेषां विचारेण चित्तेऽनुमानद्वारात्मानुसन्धाने आत्मानमप्यस्मिन् सञ्जाते श्रवणादिभिः साक्षात्करोतीति । अयं दृष्टान्तः परम्परया ज्ञानजनने, शरीरसमवेतचेष्टया निमित्तभूतस्यात्मनो ज्ञानात् । द्वितीयस्तु बाह्येन्द्रियभेदज्ञानजननेऽयं वीणाशब्दो न केवलः । यथा चेष्टादिरूपाण्यात्मकार्याणि तथा बाह्येन्द्रियकार्याण्यपीति तेषा विचारेणानुमानद्वारात्मानुसन्धानवद् बाह्येन्द्रियानुसन्धाने तान्येवात्मेत्यापत्तौ यथा वीणाशब्दो न केवलमङ्गुलीसंसर्गप्रयुक्तः, किन्तु मनोव्यापारविशेषप्रयुक्तस्तथा चेष्टादिरपि न बाह्येन्द्रियमात्रप्रयुक्तः । किन्तु आत्मप्रयुक्तोऽपीति न बाह्येन्द्रिया-

णां स्वातन्त्र्यमिति ज्ञायते । अतः स शब्दो हि तत्कारणस्य बाह्याद्भेदेन ज्ञापकतया गृहीतो भवतीति । तृतीयस्तु मनसोऽपि भेदज्ञानजनने । शङ्कीयशब्दस्तत्कारणान्तःकरणादिभेदेन ज्ञापकतया गृहीतो भवतीति मुख्यप्राणस्यायं शब्द इति । शब्दस्यापि वायुगुणत्वात् । नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोऽनिलः * परान्वयाच्छब्दवांश्चेति वाक्यात् ।

नच त्वग्ग्राह्यत्वापत्तिः । तत्तद्भूतगुणत्वेन तत्तद्भौतिकेन्द्रियग्राह्यत्वे व्याप्त्यभावात् पार्थिवरूपादीनां चक्षुरादिग्राह्यत्वदर्शनात् । वायौ शब्दोपलम्भाच्च । नचासौ भ्रमः। बाधकाभावात्। गौरवं तु प्रमाणसिद्धमित्यदोषः । एवं सङ्घाताद्भिन्नतया सङ्घातेऽन्तरात्मज्ञाने मननम् उपाय उक्तः। ततः पूर्वोक्तमात्मनः सर्वत्वं कथं ज्ञेयमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं तत्रैव लीयत इति घटादेः पूर्वं पश्चाच्च मृदिव सर्वस्यात्मेति बोधनाय, नैयायिकाद्यभिमतनिमित्तमात्रतानिराकरणाय च, यथार्द्रैधाग्नेरिति, यथा सर्वासामपामिति काण्डकाद्वयमाह । तथापि स्थितिदशायां भेददर्शनात् सर्वमुपचार इति, तन्निवारणाय स्थितिदशायामप्यात्मैव, नान्यत् किमप्याधेयत्वेन विशतीति बोधयितुं, स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवेत्यन्तर्बहिस्तस्यैवानन्तरत्वमबाह्यत्वमैक्यरूपं चाह । तर्हि सर्वदा कुतो न प्रतीयत इत्यत आह । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति । एतानि शरीरात्मकानि महाभूतानि कार्यत्वादस्य ज्ञापकानीति तेभ्यः समुत्थाय तद्द्वारा स्वं ज्ञापयित्वा तानि विनश्यन्तित्यन्यमात्माऽप्यनुविनश्यत्यदर्शनं प्राप्नोतीति । तर्हि समुत्थानानन्तरं विनाशक्रियादर्शनात् कालपरिच्छिन्नो भविष्यतीत्याशङ्कायां तावन्मात्रतानिराकरणाय आह।

न प्रेत्य संज्ञास्तीति। प्रेत्य भूतलयोत्तरं संज्ञा सम्यग्ज्ञापकं नास्तीति। तथाच कार्यस्य एतज्ज्ञापकरूपत्वेन तस्मिँल्लीने ज्ञापकाभावान्न ज्ञायते, न तु तस्याभाव इति तदानीमपि विद्यमानत्वान्न स काल-परिच्छिन्न इति भावः । एवमुक्ते, स होवाच मैत्रेयी । अत्रैव मा भगवान्मोहान्तमपीपदन्न वा अहमिदं विजानामि न प्रेत्य संज्ञास्तीत्युक्तम् । ततस्तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह।स होवाच याज्ञवल्क्यः, न वा अरे मोहमहं ब्रवीम्यविनाशी वारेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति । अत्राविनाशीत्यनेन स्वरूपनित्यत्वमनुच्छित्तिधर्मेत्यनेन स्वरूप-धर्मनित्यत्वं च कार्यवैलक्षण्यज्ञानाय सिद्धवत्कारेणोक्त्वा विषयसम्बन्धेन संसारमाह । मात्रासंसर्गस्तस्य भवतीति । तथाच यद्यऽनित्यः स्याद्विषयसम्बन्धेन संसारः कस्य स्यादतः सोऽविनाशीत्यर्थः । यद्येवं तर्हि तद्दर्शनार्थं विशेषोऽपि वक्तव्य इत्याकाङ्क्षायां विशेषतस्त्वकथने हेतुमाह । यद्वै तमित्यादिना, यावत्समाप्ति । यद्वै तन्न पश्यति। पश्यन् वै तद् द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्न तु द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति । तन्न पश्यतीत्यत्रानुस्वारस्य परसवर्णः । यतश्चक्षू रूपमेव पश्यति नात्मानमतो यद्वै तन्न पश्यतीत्यनेनात्म-दर्शनाभावमनूद्य, ननु रूपमप्यात्मा, कार्यस्य कारणात्मकत्वादिति कथं न दर्शनमुच्यत इत्याशङ्क्याह पश्यन् वै तद् द्रष्टव्यं न पश्यति रूपात्मकात्मानं पश्यन्नपि द्रष्टव्यत्वेन न पश्यतीति । तथाचेदं तस्य दर्शनाभावस्य स्वरूपं, न तु सर्वथा तद्दर्शनाभावरूपम् । कथं तद्दर्शनाभावरूपमित्यतो युक्तिमाह । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादित्यादि । दृष्टेरिति पञ्चमी । अग्रे घ्राणादित्यादिपञ्चमीमप्याहस्यैव दर्शनात् । तथाच द्रष्टुरात्मनो दृष्टेश्चक्षु-

रिन्द्रियादिपरिलोपो विरुद्धः परिलोपः सर्वथा अदर्शनरूपो न विद्यते। अविनाशित्वात्। स्वरूपतः स्वरूपधर्मतश्च नित्यत्वात्। तर्हि पश्यत्त्वमेव, नापश्यत्त्वं, तत्राह। न त्वित्यादि। यं द्वितीयं पश्येत्। यद् दर्शनकरणमिन्द्रियं तत्तु तत आत्मनोऽन्यद्विभक्तं नास्ति। भेदे विभागे च सति द्रष्टृदृश्यभावः। स तु कार्ययो रूपचक्षुषोरेवातो रूपदर्शनं, न तु कार्यस्य चक्षुषः कारणादात्मनो भेदो विभागो वा। अतस्तदभावाच्चक्षुः स्वकारणमात्मानं न पश्यतीत्यपश्यत्त्वम्। न हि द्रष्टुः स्वरूपं दृश्यज्ञानेन ज्ञातं भवति। अतद्रूपत्वात्। एवं द्रष्टृदृश्यव्यवहारेणाज्ञानदशायां विशेषतस्तज्ज्ञानमशक्यमित्युक्त्वा ज्ञानदशायां विशेषेण वक्तुं शक्यं भविष्यतीत्याकाङ्क्षायां ज्ञानोत्तरं कर्तृकर्मभाव एव नास्तीत्याह। यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येदित्यादि। यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदित्यादि। एवञ्चाऽवस्थाद्वयेऽप्यशक्यवचनत्वाद्विशेषो न वक्तुं शक्य इत्यर्थः। तदेतन्निगमयति। येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति। एवमुपदिश्योपसंहरति। उक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति। इदमेवं ज्ञानं सर्वनिमित्तापादानभूतम् अविनाश्येकमेव तत्त्वमस्याकारकज्ञानोत्तरं यन्निर्विषयात्मरूपं ज्ञानं तदेवामृतत्वमित्यर्थः। अत्र उपक्रमस्यामज्ञातविरोधित्वेन जीवोत्कर्षार्थम् अमृतत्वजगत्कर्तृत्वयोः कथनसम्भवादिदं जीवप्रकरणमिति पूर्वपक्षः। तत्र वाक्यान्वयादित्यनेन समाहितम्। अयमर्थः। वाक्येऽन्वयो वाक्यान्वयस्तस्मात्। सर्वस्मिन् वेदरूपे महावाक्ये ब्रह्मणः कारणत्वेन अनुगमदर्शनादिदमपि वाक्यं भगवत्येवान्वेति, न जीवे इति नात्र जीवनिरूपणमिति भाष्यप्रकाशे श्रीपुरुषोत्तमाः। वाक्यानाम् अन्वयो वाक्यान्वयस्तस्मात्। अत्रत्यानाम् अवान्तर-

वाक्यानामन्वयो भगवत्परत्व एव सम्भवतीति नात्र जीवप्राधान्यगन्धोऽपीति वृत्तिकृतः श्रीकृष्णचन्द्राः । नचोपक्रमे, न वा अरे इत्यादिना निरुपधिप्रियत्वेन जीव एवोपक्रान्त इति कथं तस्याप्राधान्यमिति वाच्यम् । अत्र हि मैत्रेय्यै मोक्षोपायमुपदेष्टुं निरुपधिप्रियमात्मानं प्रकृष्टमोक्षोपायभूतं तद्दर्शनं, दर्शनोपायभूतं श्रवणादित्रयं चोपदिशति । तत्र प्रियत्वस्यापाततो विचारे देह एव तादृशो भातीति तन्निवारणायात्मदर्शनादिना सर्वज्ञानं सर्वस्यात्मभेदद्रष्टुरपराधं च वदन् सर्वस्यात्मत्वं बोधयति । एवं देहस्य सर्वात्मकत्वं न सम्भवतीति तद्भिन्नस्य कस्यचिदात्मन उपदेश इति तस्य ज्ञाने श्रवणेन जाते स क इत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह मननार्थम् । तत्र देहचेष्टादिभिः परम्परया ज्ञापयितुमाद्यो दृष्टान्तः । ततो द्वितीयस्तु बाह्याद्देहाद्भेदं ज्ञापयितुम् । ततोऽभ्यन्तराद्भेदं ज्ञापयितुं तृतीयः । तेषु त्रिष्वपि दुन्दुभिदुन्दुभ्याघातवीणावीणावादशङ्खशङ्खध्मानरूपेण द्वौ द्वौ वदन् द्वौ जीवपरमात्मानौ देहाद्भिन्नाविति साधयति । ततो द्वावपीदृशौ । तदा पष्ठ्ये आत्मनि एकवचनं किमित्युक्तम् । यद्येक एव तादृशस्तदा जीवे तादृशत्वस्याननुभवात् पूर्वदृष्टान्तत्रये द्वौ द्वौ किमित्युक्तावित्याकाङ्क्षायां जीवस्य तदंशत्वेन तदधीनत्वं वक्तुं, स यथार्द्रैधाग्नेः, स यथा सर्वासामपामित्यादिकण्डिकाद्वयेन सर्वोत्पादकं सर्वाधारं च साधयति । तेन निष्काममकामात्मनोर्निषयस्यात्मनो भेद आत्मत्वेनैकरूपत्वाच्चाभेद इति सिद्ध्यति । एवं भेदे सिद्धे सर्वोत्पत्तिलयाधारस्यैवात्मनो मोक्षार्थं निदिध्यासनं वक्ति । एवं सति ह्यात्मनः प्रकृतत्वं प्रियत्वेन जीवे तस्य सत्त्वात्तदन्वयेनैव जीवस्यापि प्रियत्वम् । प्रियत्वस्य सुखधर्मत्वात् । यो वै भूमा तत्सुखं, नाल्पे सुखमस्तीति श्रुत्या ब्रह्मण एव सुखरूपत्वात् । अतः मतीय-

मानं प्रियत्वादि ब्रह्मण्येव पर्यवस्यदुपक्रमस्य जीवबोधकतां विघटयति। उपक्रमाद्यपेक्षयोपपत्तेर्बलिष्ठत्वात्। एतदेवोपबृंहितं श्रीभागवते भगवता, अहमात्माऽऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि * अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रिय इत्यनेन ॥

ननु नैवं वक्तुं युक्तम् । आर्द्रैधाग्निदृष्टान्तेन प्रकृतिसंसृष्टस्यैवात्मनः प्रकृतत्वात् । तत्र च सत्त्वगुणसंसर्गेण प्रियत्वस्यापि शक्यवचनत्वान्नेयमुपपत्तिरितिचेत् । नैतत् साधीयः । आत्मैवेदमग्र आसीत्, तत्तेजोऽसृजत, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादिसावधारणश्रुतिव्यापकोपाद् बहूनामनुग्रहस्य न्याय्यत्वात् सर्वोपनिषदनुसारेणैतद्वाक्यार्थस्योचितत्वात् । नच दृष्टान्तविरोधो वाच्यः। तदैक्षतेति श्रुतेच्छाया उक्तत्वात् तत्संसर्गेणैव दृष्टान्तोपपत्तेः। नचेच्छाया द्वितीयत्वम् । धर्मत्वेनात्मान्तःपातित्वात् ।याज्ञवल्क्येन मोक्षार्थमुपदिष्टज्ञानस्य जीवविषयतया शक्यवचनत्वाच्च । तमेव विदित्वेति सावधारणश्रुतिः । किञ्चाग्रे यथा सर्वासामपां समुद्र एकायनमिति लयस्थानत्वमपि ब्रह्मण्येव सङ्गतम् । यत्प्रयन्त्यभिसंविशन्तीति श्रुतेः। अन्यच्च, ब्राह्मणद्वयमवान्तरवाक्यं, महावाक्याद् दुर्बलम् । तदन्तर्गतत्वात्। महावाक्यं तु बलवत् । ततोऽपि वेदः । स तु सर्वोऽपि ब्रह्मपर एव । सर्वे वेदा यत् पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य इति, तं त्वौपनिषदं पुरुषं पृच्छामि, नारायणपरा वेदा इत्यादिश्रुतिवाक्यैः । एवञ्च तदेकवाक्यता यावत्पर्यन्तं सम्भवति तावत्पर्यन्तमन्यार्थस्यानुचितत्वेनावक्तव्यत्वमिति सिद्धम् । प्रसङ्गादन्यासामप्यर्थ उच्यते । तत्र यौ द्वावात्मानौ कार्यद्वारा परिचायितौ तयोः किं सर्वथा भेदः, किं कार्यकारणयोरिव भेदाभेदावुतांशांशिनोरिव तावथवा सर्वथाऽभेदः ? तयोः स्वरूपं च किमित्याकाङ्क्षायां मैत्रय्यधिकार-

परीक्षा । ततः, स यथा सैन्धवखिल्य इत्यादिना दृष्टान्तेनांशत्वम्। एवं वाऽरे इदं महद्भूतमित्यादिना दार्ष्टान्तिकस्य जीवस्य स्वरूपं वक्ति । स जीवः । सिन्धुरुदकं तत्र भवं सैन्धवं लवणम् । तस्य खिल्यः शकल उदके प्रास्तः प्रक्षिप्तः सन्नुदकमेवानुक्षेपाधारमुदकमेव लक्ष्यीकृत्य विलीयेत उदकभावमापद्येत न कश्चिदस्योद्ग्रहणाय उदूर्ध्वं पूर्ववद्ग्रहणायेव स्यात् । इवशब्दोऽनर्थकः । शक्तः स्यात् । यतो हेतोर्यस्मादुदकदेशादाददीत आस्वादनाय गृह्णीयात् । लवणमेव लवणरसमेवास्वादयेत् । एतेन लवणभावेनांशत्वेऽपि उदकरूपेणैव तस्य सत्ता, न लवणत्वेनेति लयदृष्टान्तो व्याख्यातः। अग्रे च, य एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीति लयो निरूपितः । अयमर्थः । यथायं लवण एवमेवारे मैत्रेयि इदं जीवात्मतत्त्वं महत् अनवच्छिन्नं भूतं सिद्धम्। अनन्तम् अविनाशि अपारमनादि विज्ञानघने ज्ञप्तिमात्रस्वरूपे एव। प्रथमान्तपक्षे ज्ञप्तिरूपम् । तादृक् सदेवैतेभ्यः स्थूलसूक्ष्मशरीराकारेभ्यो भूतेभ्यः समुत्थाय सूर्यरश्म्यादिभ्यो रसः सैन्धवभावमिव पराभिध्यानादयमविशेषफलेभ्य उत्कृष्टभावं प्राप्यते । तानि भूतानि विनश्यन्ति सन्त्यनुविनश्यति भोक्तृभावं त्यजति। न प्रेत्य संज्ञास्ति, विमुक्त्यनन्तरं संज्ञा देवमनुष्यादिरूपा नास्ति, किन्तु ज्ञप्तिमात्रस्वरूप एव भवतीति । एवं लये संज्ञाभावो व्याख्यातः । तन्निरूपणार्थं मिष्टोदके लवणप्रक्षेपेऽविभागदशायामपि भेदज्ञानाच्च संज्ञाया अभाव इति मैत्रेय्या मोहो जातः। प्रेत्य सम्यग्ज्ञानाभावः कथं, किमात्मनः स्वरूपनाशादुत दर्शनाभावात् । तत्र यदि नाशात्तदाऽनन्तत्वापारत्वे कथं सङ्गच्छेते। अहं च कथममृता भविष्यामि । अथ यदि दर्शनाभावात्तदा स्वरूपसद्भावे कथं दर्शना-

भात्र इतिनिदा याज्ञवल्क्य आत्मस्वरूपसद्भावेऽप्यदर्शनप्रकारमाह। यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्युपक्रम्य जिघ्र-त्यभिवदति शृणोति मनुते विजानातीति । यस्यां विभागदशायां द्वैतमिव भवति वास्तवद्वैताभावेऽप्यद्वैताविरुद्धं द्वैतं भवति तत्रेतर इतरं पश्यति । एवं द्वैतदर्शनमुक्त्वा यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येज्जिघ्रेदभिवदेच्छृणुयान्मन्वीत विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादित्य-न्तेन । यत्राविभागदशायामेतदीयभेदकस्य स्थूलसूक्ष्मशरीरस्य लये देहस्य विज्ञातृभावाद् ब्रह्मरूपतायां सम्यग्ज्ञानाभावः सुवर्ण-ताऽऽपन्नकटकादिवत्।अत्र भूतरूपदेहनाशो विशेषदर्शनाच्छुक्ति-कारजतनाशवदभिप्रेत इति कश्चित् । तदचारु । यत्र त्वस्य सर्व-मात्मैवाभूदिति श्रुतिस्वारस्यात् । अतः कार्यस्य कारणे लये कार्यरूपादर्शनवदभिप्रेतः । एवं जीवस्यापि लये स्वकार्याक्षमत्व-म् । तेन दर्शनादिकर्तृत्वाभावो ज्ञेयः।तेनेदं सिद्धम्। तत्पूर्वं मोक्षा-ऽर्थं ससाधनमात्मज्ञानमुपादिष्टम् । तज्जीवदशायामेव साधनीयं श्रवणादिभिः । तस्य लयेऽविभागे तस्याशक्यक्रियत्वात् । जीव-स्वरूपं किमित्याकाङ्क्षा तु, इदं वा अरे इत्यादिना पूरिता । तेन मोक्षार्थिनो जीवस्य स्वरूपज्ञानार्थमत्र ब्रह्मोपदेशः।तथाच करण-ग्रामाभावात्तस्य ज्ञानाभावः । तेनाऽविनाशिरूपस्य विज्ञानात्मनः सत्त्वादिदानीं च करणग्रामस्यापि सत्त्वात् पूर्वोक्तैर्दर्शनसाधनै-स्तत्राऽमृतत्वायाऽयमात्मा द्रष्टव्य इति तव तस्य ज्ञानं भविष्यती-त्युक्तं भवति । एवमधिकारे ज्ञाते तस्यै मोक्षाय ब्रह्मोपदेष्टुं द्विती-यब्राह्मणे, वागेकायनमित्यन्तं पूर्ववदुक्त्वा, स यथा सैन्धवघनो-ऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेव वा अरे इदं महद् भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एतेभ्यो भूतेभ्यः समुत्थाय

तान्येवानुविनश्यति, न प्रेत्य संज्ञास्तीत्यादि पूर्ववदेवाह । एतेन जीवस्वरूपाद्वैलक्षण्यं ज्ञापितम् । अयं तु यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादिति दृष्टान्तं निरूप्य दार्ष्टान्तिके, एवमित्यनेनानन्तरत्वमबाह्यत्वं च संगृह्णन्नग्रे प्रज्ञानघनत्वं च, इदं महद्भूतमनन्तमपारमिति पूर्ववदाह । तेन महदादिचतुर्भिर्धर्मैर्जीवसाम्यम् । प्रज्ञानघनत्वेन स्वरूपसाम्यम् । वस्तुतस्तु जीवे विज्ञानघनपदवाच्यत्वं, ब्रह्मणि च प्रज्ञानपदवाच्यत्वमिति विशेषोऽपि स्वरूपे ज्ञातव्यः । एवञ्च, स यथा सैन्धवखिल्य इति पूर्वोक्तजीवदृष्टान्तेऽनन्तरत्वाबाह्यत्वकृत्स्नत्वाराणमभावेनाग्रे च इदं महद्भूतमनन्तमपारं विज्ञानघन एवेत्यत्र चतुर्भिरेव तस्य विशेषितत्वेन चानन्तरत्वाबाह्यत्वकृत्स्नत्वैर्जीवादाधिक्यमत्र ब्रह्मणि बोधयंस्तस्याऽकृत्स्नस्य सान्तरत्वसबाह्यत्वानि सूचयंस्तस्य खिल्यतां द्रढयति । ननु कथं ब्रह्मणि भूतसमुत्थानानुविनाशयोः सङ्गतिरितिचेदित्थम् । द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते इति श्रुत्या जीवपरमात्मनोः शरीरे स्थितिरिति जीवे तथात्वस्येव परमात्मनि तथात्वस्य शक्यवचनत्वात् । प्रेत्य संज्ञाभावस्तु लोकान्तरगत्यनन्तर सम्यग्ज्ञानाभावो बोध्यः । स च जीवस्येन्द्रियाणां च लयेन जीवेन्द्रियाणां भवति । ब्रह्म तु न विलीयते । जीवोऽपीदानीं वर्त्तत इति ब्रह्मणः कथं संज्ञाभावो जीवस्य लोकान्तरगमनोत्तरमित्येवं मैत्रेय्या मोहे जाते तं निवारयितुम् अविनाशी वाऽरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्तस्य भवतीत्याह । तथाच मात्रासंसर्गदशायामत्र तस्य ज्ञानं विषयद्वारा, जीवस्य लोकान्तरगतौ विषयाभावान्न सम्यग्ज्ञानमिति भावः । यद्वा विषयसंसृष्टत्वान्न तस्य सम्यग् ज्ञानं, किन्तु विषयाणामेवेति भावः । अयमर्थो, यद्वै तन्न पश्यतीति श्रुतिव्याख्यानेन पूर्वमेवोक्तः ॥

ननु मात्रारूपविषयसंसर्गो ब्रह्मण्यऽशक्यवचन इति चेन्न। जीवस्य ब्रह्माश्रितत्वेन तद्धर्माणामपि परम्परया परे परिनिष्ठितत्वात् हस्तपुस्तकसंयोगे पुरुषपुस्तकसंयोगवत्, जीवमुच्यमानलिङ्गसूत्रे ब्रह्माश्रितत्वस्य जीवे निरूपणात्। तत्राग्रे विज्ञातृत्वं ब्रह्मधर्मः। नान्योऽतोऽस्ति द्रष्टेति श्रुतेर्द्रष्टृत्वस्य तत्रैव नियमात्। स धर्मो जीवेऽपि ब्रह्मांशत्वाद्भासत इति नात्र जीवनिरूपणगन्धोऽपीति। एतेन प्रियत्वं ब्रह्मधर्म इति सिद्धम्। तच्च, प्रेमा ना प्रियता हार्दमिति कोशाद्भक्तिरूपम्। तत्रैव सकलशास्त्रपर्यवसानमिति निश्चयः। तथाहि मन्त्रब्राह्मणात्मका हि वेदान्ताः। मन्त्रब्राह्मणरूपत्वं चोत्पश्याम इति भाष्यात्। ननु, तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्द इति जैमिनीयसूत्राभ्यां मन्त्रब्राह्मणयोः प्रयोगकालेऽनुष्ठानौपयिकाऽर्थस्मारकत्वमन्त्रभिन्नत्वलक्षणकत्वेन वेदान्तेषु विध्यनङ्गीकारेण प्रयोगाद्यभावात् तद्वाक्येषु कथं मन्त्रब्राह्मणात्मकत्वम्। प्रत्युत वेदान्ताः, किं वेदशेषा वेदा वा। नाद्यः। तथा सति द्रव्यदेवतादि प्रकाशयँस्तत्तदितिकर्त्तव्यतां वा बोधयन्तो वेदाऽर्थे यागे क्वचिदुपयुक्ताः स्युः। तन्न दृश्यते। न द्वितीयः। यज्ञाप्रतिपादनान्मन्त्रब्राह्मणत्वाऽभावात्। अनाम्नातेषु मन्त्रत्वमाम्नातेषु हि विभागः स्यादिति सूत्रभाष्ये— आम्नातत्वे सति तच्चोदकेषु मन्त्राख्या। तथात्वे सत्येव, शेषे ब्राह्मणशब्दस्तदाह। आम्नातेषु विभागो द्विविधः। अन्यथा लौकिकवाक्यानां, सङ्कल्पस्य तथात्वं स्यादिति वेदोपरत्वापातो वेदान्तेष्वितिचेद्, अत्र श्रीपुरुषोत्तमाः। सूत्रविचारे ह्याम्नातत्वे सति तत्त्वेन विधिबोधितोच्चारणकः शब्दो मन्त्रः, आम्नातत्वे सति मन्त्रभिन्नः शब्दो ब्राह्मणमिति तयोर्लक्षणम्। तदुभयात्मकत्वं वेदलक्षणं सिद्ध्यति। न तु विधेयार्थस्मारकत्वस्य मन्त्रलक्षणत्वम्। तस्य, वसन्ताय कपिञ्जलानालभे-

तेऽप्यत्राव्याप्तेः । नच मननहेतुर्मन्त्र इति युक्तम् । ब्राह्मणेऽतिव्याप्तेः । नाऽपि प्रयोगकरणभूतः शब्दो मन्त्रः । तस्य प्रसगाशीर्मन्त्रेऽव्याप्तेः । किन्तु अभियुक्तानां यत्र मन्त्र इति समाख्यानं स मन्त्र इति तल्लक्षण स्वीक्रियते । यदि चरणव्यूहानुरोधेन वसन्ते-त्यादीनां ब्राह्मणत्वं विभाव्य प्रयोगकरणभूतः शब्दो मन्त्र इति सौत्रमेव लक्षणमाद्रियते । तदापि जपोपासनादिप्रयोगं प्रति प्रसगाशीर्मन्त्राणां विषयविधया करणत्वमित्यदोषः । तच्चक्सामयजुःष्वेव प्रसिद्धम् । अग्नीदग्नीन् विहरेत्यादिनिगदादीनामपि तत्रैव निवेशः । ब्राह्मणलक्षणमप्यत एव सिद्धं ज्ञेयम् । तथा वेदान्तेषु, सत्यं ज्ञानमित्यादीनामृचामच्युतमसीत्यादीनां यजुषां, हावु हावु इत्यादीनां साम्नां च विद्यमानत्वात्तान्येव मन्त्राः । तद्भिन्नं ब्रह्मप्रतिपादकं ब्राह्मणम् । ब्रह्मप्रतिपादकभागशेषाः सृष्ट्यादिनिरूपका भागा ब्राह्मणे निविशन्ते । एवञ्च वेदान्तानां मन्त्रब्राह्मणात्मकत्वं निर्विवादमिति । एतेन वेदान्तेषु वेदत्वबोधनेन वेदोपरत्वमपि प्रत्युक्तम् । किञ्च, अध्ययनाध्यापनविधिभिर्वेदान् पठन्तः पाठयन्तोऽर्थं चावगच्छन्त आर्याः स्वरपूर्वकमनध्यायशूद्राश्रवणादिनियमान् पालयन्त एव तथा कुर्वन्तीत्याचारपरम्परयापि वेदत्वम् । किञ्च, औत्पत्तिकसूत्रे बादरायणग्रहणं पूजार्थं कृत्वा अलौकिकेऽर्थे वेदस्यानपेक्षं प्रामाण्यं जैमिनिना प्रतिपादितम् । तत्रालौकिकोऽर्थः को वेत्याकाङ्क्षायां यथा तन्मते यज्ञस्तथा व्यासमते ब्रह्म । अनुपलब्धार्थत्वस्योभयत्रापि तौल्यात् । अपरं च यागप्रतिपादकत्वेन वेदत्वं वदता किं यावद्यागप्रतिपादकत्वं वेदत्वमुत यत्किञ्चिद्यागप्रतिपादकत्वं तत्त्वमथवा यथाकथञ्चिद्यागप्रतिपादकत्वं तथेति किं स्वीक्रियते । नाद्यः । अग्निहोत्रादिप्रतिपादकभागस्य तदितरयागाप्रतिपादकत्वेनावेदत्वप्रसङ्गात् । न

द्वितीयः । सर्वस्य तथात्वप्रसङ्गात् । मनुः पुत्रेभ्यो दायं व्यभज-दित्याद्यर्थवादस्यापि तथात्वप्रसङ्गाच्च । तृतीयश्चेत् सिद्धं ब्रह्म-प्रतिपादकत्वेऽपि वेदत्वम् । यदेव विद्यया करोतीति श्रुतेस्तेषाम-पि यज्ञार्थत्वेन तथात्वादित्याहुः ॥

तत्रेदं बोध्यम् । इदं दूषणपरिहरणं तन्मतमवलम्ब्यैवेति । तेनार्थवादानां सिद्धान्ते वेदत्वेऽपि न क्षतिः। एवं, यदेव विद्ययेति वाक्यस्य उद्गीथविद्याप्रकरणाऽवरुद्धस्य सिद्धान्ते विद्यान्तरासं-ग्राहकत्वेऽपि न क्षतिः । अथास्त्वर्थवादत्वं वेदान्तानाम् । वि-ष्णोरिज्यत्वेन कर्मशेषत्वात् । तत्स्वरूपज्ञानपूर्वकयागस्य फला-ऽतिशयहेतुत्वात् तन्माहात्म्यकथनस्यावश्यकत्वात् । वायुर्वै क्षेपि-ष्ठा देवतेति वाक्यवत् । नैतत् । कर्माधिकस्य तच्छेषत्वाभा-वात् । तथाहि । स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः स-र्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च। स न साधुना कर्म-णा भूयान्नो एवाऽसाधुना कनीयानित्युपक्रम्य पठ्यते । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनाऽनाशकेनैवैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोक-मभीप्सन्तः प्रव्रजन्तीत्यादि। अत्र च तज्ज्ञानशेषत्वं यज्ञे प्रतिपाद्यत इति कथं तस्य यज्ञशेषत्वं वक्तुं युक्तम् । तत्र पूर्वं सामान्यत इज्यज्ञानमभीप्सेन विशेषतो ज्ञाने सति पुनर्यज्ञकरणे पूर्णं कर्म-फलं भवतीति न तद्‌शेषत्वमिति वाच्यम् । तमेव विदित्वा मुनि-र्भवति, एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति श्रुतेस्तद्वे-दनस्य गार्हस्थ्यविरोधित्वेन तदसम्भवात् । साध्वसाधुकर्मफलर-हितस्य कर्तृत्वेन तथात्वस्यानुपपन्नत्वाच्च । अतो जीवात्मन एव तथात्वं, न तु परस्येति नार्थवादत्वम् । जीवस्यांशत्वं व्यवस्था-पितमेवाकरे । किञ्च, न कर्मणा न प्रजया धनेन त्यागेनैके अमृत-

त्वमानशुः * परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्तीति श्रुत्या कर्मप्रजाधनैर्मोक्षाप्राप्तिमुक्त्वा त्यागेन तत्प्राप्तिरुच्यते । त्यागविषयस्यान्यस्यानुक्त्या सान्निध्यात् कर्मादीनामेव त्यागोऽभिप्रेतः । तावत् कर्माणि कुर्वीत न निर्विद्येत यावतेति स्मृतेः। तथाच मुक्तोपसृप्यभगवन्तमुक्तसाधनेन मुक्ताः सन्तो नाकं परेण विद्यमानमपि भक्त्या, गुहायां विभ्राजते तं, यस्मात् परं नापरमस्तीत्यादिनोक्तं पुरुषोत्तमं यतयो विरहेण वह्निना स्थातुमशक्ताः सन्तस्तत्प्राप्त्यर्थं यतमाना विशन्तीति भक्तिमार्गीयफलमुक्त्वाग्रे वेदान्तविज्ञानेत्यृचा ज्ञानमार्गीयफलमुक्तम् । अन्यथा पौनरुक्त्यापत्तेः । नच ब्रह्मविदां वशिष्ठादीनामग्निहोत्रादिकरणं दृश्यते । त्यागावश्यकत्वे तु गार्हस्थ्यमेतेषां न स्यात् । उक्तश्रुतिस्तु कर्मण्यऽशक्तानां तेषां त्यागमनुवदतीति वाच्यम् । दर्शनस्य तौल्यात् । ब्रह्मविदामपि शुकर्षभादीनां त्यागदर्शनात् । तथाच यद्विदां कर्मत्यागस्तस्य कर्मशेषत्वं शङ्कितुमप्यशक्यमिति । तेन कर्मण्यशक्तान् प्रति त्यागविधिरिति निरस्तम् । शुकादीनामतथात्वात् । ननु यद्येवं तदा, जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे इति श्रुतिस्तद्विदाम् आयाससाध्ये कर्मणि प्रवृत्तिं न वदेदितिचेन्न । अस्याऽऽचारस्य अतात्पर्यिकत्वात् । एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे । एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । एतावदरे खल्वऽमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति श्रुतेः । ननु कथं ब्रह्मवित्त्वे तुल्येऽप्येकेषां कर्मकातिरेकेषां तत्त्याग इतिचेदित्थम् । अनुग्रहस्यैव भक्तिमार्गेऽधिकारकपत्वेन तदुत्कर्षे त्यागस्तदनुत्कर्षे नेति अधिकारतारतम्यकृतपूर्णा-

ऽऽनन्दगणितानन्दक्षुद्रानन्दशक्तिवत् ॥

ननु नैवं वक्तव्यम् । आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्, ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आतृतीयात् पुरुषात् सोमं न पिबति, यावज्जीवमग्निहोत्रं जुहुयादित्यादिश्रुत्या कर्मनियमश्रवणात् । त्यागनियमाश्रवणाच्च । नियतस्य तु संन्यासः कर्मणो नोपपद्यते * मोहात् तस्य परित्यागस्तामसः परिकीर्त्तित इति स्मृतेश्चेति चेन्न । अविशेषात् । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतौ कर्मादीनाममृतत्वप्राप्तिनिषेधपूर्वकं त्यागस्यामृतत्वार्थमावश्यकत्वकथनात् । तथाचेयं व्यवस्था । मुमुक्षोः कर्मत्यागनियमोऽमुमुक्षोस्तु कर्मकृतिनियम इति । नन्वेष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयानिति श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिद्ध्येते । स च प्राप्तिपूर्वक इति तस्यापि कर्मकरणमावश्यकमिति चेन्न । इच्छामात्रेण तत्करणात् । अखण्डाद्वैतभानवतः कर्मासम्भवाच्च । द्वैतभान एव यथाकथञ्चित्कर्मकरणसम्भवात् । तं विद्याकर्मणी समन्वारभेते इति श्रुतिस्तु संसार्यात्मनः पूर्वदेहत्यागे फलारम्भे विद्याकर्मणोः साहित्यं वक्ति, न तु ब्रह्मविद इति । ब्रह्मिष्ठो ब्रह्मेति श्रुतितात्पर्यमपीतरस्वीकृतैकवाक्यतादूषणावसरे वक्ष्यते इति न कथमपि ब्रह्मणः कर्मशेषत्वं, येन वेदान्तानामर्थवादत्वं भवेत् । एवं सिद्धे वेदान्तेषु वेदत्वे, नायमात्मा प्रवचनेन लभ्यो, नायमात्मा बलहीनेन लभ्य इत्यादिश्रुतिभिः भक्तीतराप्राप्यपुरुषोत्तमप्राप्तिसाधनीभूतभक्तिसिद्ध्यर्थं सृष्टिप्रतिपादकवाक्यैर्माहात्म्यमुच्यते । तदभावे शिथिलत्वं स्यादिति । एवं स्नेहो ह्यात्मत्वेन ज्ञाते भवतीति सुदृढस्नेहसिद्ध्यै तत्त्वमस्यादिवाक्यैरात्मत्वं प्रतिपाद्यते । एतेन भक्तेरंशद्वयं प्रतिपादितं नु भवति । तेन च वेदान्तानां भक्तौ तात्पर्यमिति नि-

श्रीयते । तत्त्वमसीत्यत्र शास्त्रपर्यवसानमत्रैवाग्रे द्रष्टव्यम् । उदाहरणं मुण्डकोपनिषत्तृतीयमुण्डके, द्वा सुपर्णा सयुजा सखाया इत्युपक्रम्य ततः समाने वृक्ष इति द्वाभ्यां जीवस्येशज्ञाने वीतशोकत्वं साम्योपायनं चोक्त्वा ततस्तस्य, प्राणो ह्येष सर्वभूतैर्विभातीति प्राणत्वं तज्ज्ञस्य ब्रह्मविच्छ्रेष्ठत्व चोक्त्वा, सत्येन लभ्यस्तपसा ह्येष आत्मेति मन्त्रेणाऽन्तःशरीरे सत्यादिलभ्यत्वं वदति । तत्कथं शरीरे लभ्य इत्याकाङ्क्षायां सत्यमेव जयतीत्यादिना सत्यं स्तुवन् पश्यत्स्विह चैव हितं गुहायामित्यनेन पश्यत्स्वैकार्थ्यं प्रतिपादयति । तेन पश्यतां सत्येनान्तर्लभ्य इति सिद्ध्यति । ततः पश्यत्त्वं हि दर्शने सति भवति । दर्शनमेव पूर्वं कथमित्याकाङ्क्षाया, न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैरित्यादिना तपःकर्मादीनां दर्शनसाधकत्वं निषिद्ध्याग्रे ज्ञानेन चेतसा ज्ञेयत्वं प्रतिपाद्य ज्ञानिनः शुद्धसत्त्वस्य माहात्म्यं तदर्चनकामकामाप्तकामयोर्निन्दाप्रशंसे चोक्त्वाग्रे, नायमात्मा प्रवचनेन लभ्यो न मेधयेति मन्त्रेण वरणातिरिक्तसाधननिषेधपूर्वकं वरणलभ्यत्वं वृतस्यार्थे भगवतः स्वतनुप्राकट्यं च वदति । तत्र वरणं चात्मीयत्वेन स्वीकाररूपम् । तच्च भक्तेः पूर्वोक्तस्येति न तावता फलसिद्धिरिति मन्त्रान्तरेण, नायमात्मा बलहीनेन लभ्य इत्यनेन बलशब्दप्रतिपाद्यभक्तिलभ्यत्वं धामप्रवेष्टृत्वं चोक्तवती । अग्रे च सम्प्राप्यैनमित्यादिना प्राप्तात्मनां प्रशंसां, वेदान्तविज्ञानेत्यनेन शाब्दनिश्चयवतां ब्रह्मणा सह मुक्तिं गताः कला इत्यनेन परस्मिन् जीवस्यैकीभावं, यथा नद्य इत्यनेन तत्प्रकारं, सर्वो ह वा इत्यनेन वेदनं, ब्रह्मैव भवतीत्यादिना फलं चोक्त्वा ब्रह्मोपदेशाधिकारिण उक्त्वोपसंहारः । तेन ज्ञाने सति सत्यादिनान्तर्लभ्यो, ज्ञानं चाऽनुग्रहेण भक्त्या । तस्यां सत्याम् अप्रमादादिभ्यो धामप्रवेशो, नान्यथा। तत इदं गुह्यतममधिकारिभ्य

एव देयं, नान्येभ्य इति फलतीति बोध्यम् । इदं दिङ्मात्रमुक्तम्। श्रुत्यर्थस्तु विस्तरेण प्रमेयप्रकरणे वाच्यः । तदुक्तं निबन्धे । यथाकथञ्चिन्माहात्म्यं तस्य सर्वत्र वर्ण्यते * भजनस्यैव सिद्ध्यर्थं तत्त्वमस्यादिकं तथेति । एतेनात्मप्रतिपादकानां कार्यप्रतिपादकानां च वाक्यानां भक्तावेव तात्पर्यमित्युक्तम् । अतः परमन्येषां प्रतिपाद्यते । तत्रोपास्यरूपप्रतिपादकानां, सत्पुण्डरीकनयनं मेघाभं वैद्युताऽम्बरम् * द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम् ॥ अकाराक्षरसम्भूतः सौम्यार्चिर्विश्वभावनः । ध्येयः सदा सवितृमण्डलमध्यवर्त्ती । त्र्यम्बकं त्रिगुणं स्थानं त्रिधातुं रूपवर्जितम् * निश्चलं निर्विकल्पं च निराधारं निराश्रयम् ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदि सन्निविष्टः । अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । य एषोऽक्षिणि पुरुषो दृश्यते । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानमुपास्ते इत्यादीनाम् । एकः सन् विप्रा बहुधा वदन्ति, एको वशी सर्वगः कृष्ण ईड्यः । एकोऽपि सन् बहुधा यो विभाति । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तादित्यादिश्रुतेर्भगवद्विभूतिप्रतिपादकत्वेन तद्द्वारा माहात्म्यबोधकत्वाद्भक्तावुपयुक्तत्वम् । एवमन्यदप्यूह्यम् । तस्माद्वेदान्तेषु भक्तिरेव प्रतिपाद्यत इति निश्चयः ॥

तथा पूर्वकाण्डस्यापि भक्तौ तात्पर्यम्। तथाहि । अग्निहोत्रादिकर्मणां तदङ्गानां देशकालद्रव्यकर्तृमन्त्राणाम् इन्द्रादिदेवानां च, वेदैश्च सर्वैरहमेव वेद्यः, सर्वे वेदा यत् पदमामनन्ति, यज्ञो वै विष्णुरित्यादिश्रुत्या भगवद्विभूतित्वेन तत्प्रतिपादकानां वेदानां भगवन्माहात्म्यबोधकत्वाद्भक्तावुपयुक्तत्वम्। यदि च ज्ञाने चित्तशुद्धिद्वारा कर्मसमापनमिति विभाव्यते तदापि ब्रह्मज्ञस्यैव भक्तौ मुख्याधिकारित्वेन परम्परया भक्तावुपयोग इति बोध्यम् । एवमखण्डब्रह्मवादेन

अखण्डवेदस्य भक्तौ तात्पर्यमुक्तम् । तदेतदुक्तं निबन्धे । पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत् पञ्चद्वयीशतसहस्रपराऽमितश्च * एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूदित्यनेन । अर्थस्तु, पञ्चात्मकः अग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यसोमात्मकः । तत्साधनदेशकालद्रव्यकर्तृमन्त्रात्मकः । पञ्चप्राणभूताद्यात्मकः । प्रमाणमत्रोक्तं प्राक् । एतेनैतावत्स्वरूपिकाणां श्रुतीनाम् एकवाक्यता सिद्ध्यति । एवमग्रेऽपि । एकोऽपि पञ्चात्मकः । ध्यानार्थं प्रादेशमात्रः । केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् * चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्तीति वाक्यात् । आश्रयार्थमङ्गुष्ठमात्रः । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ट इति श्रुतेः । स्वामित्वार्थमक्षिस्थितः । य एषोऽक्षिणि पुरुषो दृश्यत इत्युपक्रम्य, वामनी भामनी इति श्रुतेः । वामनी कर्मफलनियामकः । फलार्थं सर्वदेहस्थित आनन्दमयः । अन्योऽन्तर आत्मा आनन्दमय इत्युपक्रम्यानन्दमयमात्मानमुपसंक्रामतीति श्रुतेः । वैश्वानरः शिरसि प्रतिष्ठितः सर्वार्थः । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्तीति श्रुतेः । तथा पञ्चकोशात्मक उपासनार्थः । आनन्दमयमात्मा मे शुद्ध्यन्तामिति श्रुतेः । उपासनं पुरुषोत्तमत्वेन चिन्तनम् । तावताऽपि न सर्वासामेकवाक्यतेत्याकाङ्क्षायामाहुः । द्विषडात्मकोऽभूदिति । द्वादशसूर्यात्मकः । पुरुषात्मकः । द्वादशाऽङ्गो हि पुरुष इति श्रुतेः । अहीनात्मकः । अग्न्यात्मकश्च । अग्नीनां द्वादशात्मकत्वं क्वचित् प्रसिद्धम् । ततोऽपि प्रकारान्तरमाहुः । पञ्चद्वयीति । दिगात्मकः, इन्द्रियात्मकः, लीलात्मकश्चेति । तथान्येऽपि दशात्मकाः स्वयमूह्या अवतारादयः । ततोऽप्यपूर्त्तिरि-

धिकमाहुः। शतसहस्रपरामितश्चेति। चत्वारो भेदा उत्तरोत्तरमधिकाः। अमिता असंख्याता विभूतिरूपाः सर्वे ज्ञातव्याः। एवं सप्तधा भगवतो रूपभेदा उक्ताः। तेन सर्वासां श्रुतीनां भजनाङ्गमाहात्म्यप्रतिपादकत्वेन भक्तावुपयोगः सिद्धः। तेन चैकवाक्यता सिद्ध्यति। तेषु भगवान् भिन्न इत्याशङ्क्याहुः। एकः समोऽपीति। सर्वेषु रूपेष्वेक एव योगिवत्। प्रादेशाङ्गुष्ठमात्रेषु न्यूनाधिकभावमाशङ्क्याहुः। समोऽपीति। क्वचिदन्यथा प्रतीतिमाशङ्क्याहुः। अखिलदोषसमुज्झितोऽपीति। ब्रह्मदासा ब्रह्मदाशा ब्रह्मेमे कितवा उतेति श्रुतेः। तथाच दोषप्रतीतिर्भ्रम इति भावः। ऐश्वर्यादितारतम्यमाशङ्क्याहुः। सर्वत्र पूर्णगुणकोऽपीति। ऐश्वर्यादिगुणाः सर्वेषु रूपेषु पूर्णाः। तथा सति कथं वैलक्षण्यप्रतीतिस्तत्राहुः। बहूपमोऽभूदिति। समो मशकेन समो नागेन समः प्लुषिणा सम एभिस्त्रिभिर्लोकैरिति श्रुतेः। तथाच क्रीडार्थं वैलक्षण्यमिति भावः। प्लुषिणा पुत्रिकाशरीरेणेति केचित्। तत्त्वं तु—प्लुष दाहे, दाहकेन विस्फुलिङ्गादिना। प्लुष स्नेहने, जलबिन्दुना वेति भाति। तथाच विधिः, भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया * तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेदिति। नन्वत्र, विजज्ञानित्युपसंहारात्, तैत्तिरीयके ब्रह्मवित्प्रपाठके च, य एवं वेदेत्युपसंहाराच्च, तत्त्वमस्यादिवाक्योत्थब्रह्माभेदज्ञानेन मुक्तिरिति निश्चीयते। तथा सति मुक्तिसाधने ब्रह्माऽभेदज्ञाने एव सर्वाणि वाक्यानि पर्यवस्यन्तीति प्रकरणादवसीयते इति कथं भक्तिशेषत्वमेषामितिचेत्। नैवम्। तथा सति आत्मत्वबोधकमेव वाक्यं स्यान्न तु माहात्म्यबोधकमिति तदन्यथानुपपत्तेर्भक्तिपर्यवसानस्यैव न्यायप्राप्तत्वात्। प्रकरणापेक्षया वाक्यस्य बलीयस्त्वात्। ननु वाक्यद्वयानुरोधान्माहात्म्यविशिष्टात्मत्वेनैव ज्ञाने पुरुषार्थसिद्धिरङ्गी-

कार्या । तावता वाक्यप्रकरणे अपि संगृहीते भविष्यत इति चेन्न। शाब्दज्ञानस्याप्रयोजकत्वात् । आधुनिकेषु व्यभिचारदर्शनात् । किञ्च । काठके, अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् * महान्तं विभुमात्मानं मत्वा धीरो न शोचतीत्यनेन ज्ञानफलमुक्त्वा, कथं तज्ज्ञानमित्याकाङ्क्षायां, नायमात्मा प्रवचनेनेत्यादिना वरणैकलभ्यत्वमुक्त्वाग्रे, नाविरतो दुश्चरितान्नाऽशान्तो नासमाहितः * नाऽशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयादित्यनेन दुराचारिप्रभृतीनां तदज्ञानमुक्त्वा सदाचाराणां ज्ञानं भविष्यतीति शङ्कार्थं, यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इत्यनेन ज्ञानदौर्लभ्यम् उक्तम् । यदि शब्दादपरोक्षं स्यादेवं न वदेत् । नच भक्तावयं दोष इति शङ्क्यम्। प्रसन्नं ब्रह्म स्वयमेवाविर्भवतीति लोकरीत्यावगम्यते इति प्रसादार्थं यतनीयमिति भक्तावेव पर्यवसानस्योचितत्वात् । नच प्रसादस्याश्रौतत्वमिति वाच्यम् । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमिति श्रुत्या प्रसादस्य दर्शनसाधनत्वकथनात् । किञ्च, किं केवलस्य शब्दस्य कारणता, उत किञ्चित्सहकारिविशिष्टस्य ? । नाद्यः । सङ्घातात्मत्वमनुभवन्तं प्रति सङ्घातव्यतिरिक्ततां बोधयन्त्या अननुभूतब्रह्मान्तं बोधयन्त्याः श्रुतेः पूर्वज्ञानेन बाधितत्वेन दुर्लभत्वात् । नान्त्यः । सहकारिविशिष्टमनसैवात्मप्रत्यक्षजननात् । तथाहि । प्रस्थानरत्नाकरे, आत्मप्रत्यक्षं प्रति योगसाधितमनसो, भगवद्दृष्टेर्दिव्यदृष्टेष्वकारणतोक्ता । तत्रैषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति श्रुतेर्मनसः कारणता । तच्च योगेन पश्यति। अन्तरेव च पश्यतीति श्रुत्यन्तराद् योगेन साधितमेवान्तरेव च पश्यति । भगवदीक्षणसमर्थया दृष्ट्या बहिः । वृत्रस्य देहान्निष्क्रान्तमात्मज्योतिररिन्दम * पश्यतां सर्वलोकाना-

मलोकं समपद्यतेति वाक्ये दिव्यदृष्टीनां देवादीनामेव सन्निधानात् सर्वलोकपदेन तादृशदृष्टिमतामेव परामर्शात् । तथा, चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्*पश्यतां सर्वलोकानामुल्केव भुवि खाच्च्युतेति वाक्ये चैद्यवधे मनुष्याणामपि सत्त्वेन सर्वलोकपदेन भगवद्विषयकदृष्टिमतामेवोक्तत्वात् । तदुक्तमाचार्यैः । योगेन भगवद्दृष्ट्या दिव्यया वा प्रकाशते * इति । तथाचैवं न प्रत्यक्षं शब्देन श्रूयते इति । अतो वैराग्यादिमनननिदिध्यासनाभ्याससहिता श्रुतिर्मनसि ब्रह्माहमस्मीति वृत्तिमुत्पादयन्ती अनुभवपरम्परया पूर्वानुभवं प्रतिबध्नाति । तत्र शब्दः सहकारी । करणं तु मन एव । तस्मान्नोभयथापि शब्दस्य करणत्वम् । ननु दशमस्त्वमसीत्यादिदृष्टान्तेन पञ्चदश्यां विद्यारण्यादिभिः शब्दस्य कारणत्वोपपादनान्नैवमिति वाच्यम् । दशमत्वस्य बाह्यत्वेन शब्दतो घटाऽऽदीनामिव तद्विषयकज्ञानस्यापि सम्भवात् । ब्रह्मण आन्तरत्वेन तद्ग्रहेण मनोऽतिरिक्तकारणाऽसम्भवात् । पराञ्चि खानि व्यतृणात् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति श्रुतेः । अथात्मनिष्ठमान्तरमेव दशमत्वं शब्दाद्भासत इत्युपेयते । तदप्यसङ्गतमेव । दशमत्वस्यापेक्षाबुद्धिजन्यत्वेन तस्यां संख्याघटकानां सजातीयानामात्मनां वा अस्य विषयीभावस्यैव ग्राहकाभावेन दौर्घट्यात् । परात्मनां परेण ग्रहणात् । तस्मान्नवत्वादिवद् दशमत्वमपि । तया जनितं बाह्यमेव । यदि च न सजातीयानां संख्याघटकत्वनियम इत्युच्यते तदापि, कृशोऽहमितिवद् दशमोऽहमिति प्रत्ययस्यापि देहस्यैव वेद्यत्वौचित्यात् । किञ्च, दशमोऽहमिति चाक्षुषज्ञानमेव, न शाब्दम् । शब्दे युष्मच्छब्दप्रयोगात् । शब्दस्य पदस्मारितार्थोल्लङ्घनेन वाक्यार्थज्ञानजनकत्वाभावात् । अतो न कथमपि

श्रुतच्छब्दादस्मच्छब्दस्मारितार्थज्ञानम् । ननु प्रत्यक्षबाधितमिदं दूरणमकिञ्चित्करमितिचेन्न । तथा जायमानं ज्ञानं चक्षुषा मनसा वा जायत इत्यङ्गीकारात् । तदुक्तं, दशमस्त्वमसीत्यादौ देहादिविषयत्वतः * शब्दस्य साहचर्येण चक्षुषैव भवेन्मतिरिति । अन्यच्च । अत्र शब्दादपरोक्षे सत्यत्र प्रत्यक्षाच्छाब्दमेवमन्यस्मादन्यदपि स्यात् । बाधकाभावात् । नन्विदं ज्ञानं शब्दसहकृतविषयादेव जायत इति चेन्न। ज्ञानस्य प्रमेयाधीनत्वे चाक्षुषं शाब्दमनुमितिरुपमितिरितिकारणनिबन्धनाया ज्ञानव्यवहारमर्यादाया भङ्गप्रसङ्गात् । अस्तु मर्यादाभङ्ग इति चेत् तर्हि तं घटमानयेत्यत्र वाक्यार्थज्ञाने प्रत्यक्षतापत्तेः । चीत्कारेण गजानुमानं च न स्यात् । मानाधीना मेयसिद्धिरित्यस्य विरोधात् । प्रत्यक्षत्वाभाववति शाब्दादौ परोक्षत्वं, परोक्षत्वाभाववति घटादिसाक्षात्कारे प्रत्यक्षत्वम् । तयोः समावेशो दशमस्त्वमसीति वाक्यजन्ये शाब्दपरोक्षे इति साङ्कर्यात् प्रत्यक्षत्वापरोक्षत्वयोर्जातित्वाभावप्रसङ्गश्च । ननु जातिरेव नाङ्गीक्रियते । द्वैतानुरोधादितिचेत् । नाङ्गीक्रियताम् । तथापि पूर्वोक्तदोषाणां वज्रलेपायितत्वेन न भवादिष्टांसिद्धिरिति । किञ्च, नाऽपि, तत्त्वमसीत्यस्य महावाक्यत्वं सम्भवति येन तत्रैव शास्त्रपर्यवसानं स्यात् । विद्याजनकत्वाभावात् । तथाहि । इदं हि वाक्यं श्वेतकेतूपाख्यानस्थम् । तत्रोपक्रमे, अपि वा तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तदेकमेव चेत् सर्वं तदोपपद्यते । यथा सुवर्णखण्डाः, सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञानेन तज्ज्ञानं भवति । तदर्थं, सदेव सोम्येदमग्र आसीदित्यारभ्य ब्रह्मणः सर्वकारणत्वं, कार्यस्य वाचारम्भणमात्रत्वेन भेदानापादकत्वात् कारणानन्यत्वं, दुर्ज्ञेयस्य ब्रह्मणो नानादृष्टान्तैः कार्यज्ञा-

च्यत्वं च निरूपितम् । एवञ्च प्रतिज्ञातस्यार्थस्यैतावता पूर्वैः प्र-
पाठकस्य महावाक्यत्वमुचितं, न तु तदेकदेशस्य— तत्त्वमसीत्ये-
तावन्मात्रस्येति । नन्वस्त्वेवं, तथापि तन्निष्कृष्टार्थस्यानेन बोधना-
दस्त्वस्यैव महावाक्यत्वमितिचेन्न । ऐतदात्म्यमिदं सर्वमिति जड-
स्य ब्रह्मात्मकत्वमुक्त्वा जडस्य च नाश्यत्वात् कथं ब्रह्मात्मकत्व-
मित्याकाङ्क्षायां तत् सत्यमित्यनेन सत्यत्व तस्योक्तम्। तदनन्तरं सर्व-
स्य तदात्मकत्वार्थं जडजीवयोर्मध्ये, स आत्मेत्युक्तम् । स परमे-
श्वर आत्मा सर्वस्य स्वरूपभूतः । यथा सुवर्णं शकलकुण्डला-
दीनाम् । एवं जडस्य तादात्म्यमुक्त्वा जडवज्जीवस्यापि तदात्म-
कत्वमाह । तत्त्वमसि । तथाच यथैतदात्म्यमेतदात्मनो भावः,
तथा तत्त्वं तस्य भावस्त्वमसीति । मध्यपुरुषेणैव त्वम्पदलाभात्
तत्त्वमित्येकं पदम् । तेन जीवस्य ब्रह्मात्मकत्वमंशत्वेनैव रूपेणेति
बोध्यते । यथा जडस्य तत्कार्यत्वेन रूपेणेति। अन्यथा वाक्यभेद-
प्रसङ्गात् । यद्वा पदभेद एव, तत् त्वमिति । अतो नात्राध्याहा-
रदोषः सम्भावनीयः । तथापि अंशत्वेनैवाभेदः । अंशो नाना-
व्यपदेशादित्यादिसूत्रैस्तथैव सिद्धत्वात् । केचित्तु शरीरवाचिनां
देवमनुष्यादिशब्दानां शरीरेष्वपि दर्शनाज्जीवस्य च, यस्यात्मा
शरीरमित्यादिश्रुत्येश्वरशरीरत्वात्तत्त्वमिति व्यपदेशः शरीरशरीरि-
भावव्यपदेशनिबन्धन इत्याहुः। केचित्तु, त्वन्मते पदद्वयलक्षणा ।
ततो वरं मद्रीत्यैकस्मिँस्तत्पदे त्वम्पदे वा लक्षणा। तथाहि, धान्य-
मसि धिनुहीत्यत्र तण्डुले धान्यशब्दवत्तदधीनत्वात्तदितिव्यपदे-
शः । प्राणबन्धनं हि सोम्य मन इति वाक्यशेषे जीवस्येशाधीन-
त्वोक्तेः । यदधीना यस्य सत्ता तत्तदित्येव भण्यते । विद्यमाने
विभेदेऽपि यतो नित्यं स्वरूपत इति भारतोक्तेः । यद्वा, तत्साह-
चर्यात् तदिति व्यपदेशः । वसन्तादिभ्यष्ठगित्यत्र साहचर्यात्तत्त्वं

दृष्टम्। वसन्तसहचरितम् अध्ययनं वसन्ताऽध्ययनमिति महाभाष्यो-क्तेः । साहचर्यं च, द्वा सुपर्णा सयुजा सखाया इत्यादौ । यद्वा तदाश्रितत्वात्तदिति व्यपदेशः । समर्थः पदविधिरित्यत्र समर्थपदेन समार्थाश्रितकथनात् । सर्वाः प्रजाः सदायतना इति वाक्यशेषाच्च। यद्वा, ब्राह्मणोऽस्य मुखमासीदित्यादिवत् ततो जात-त्वात् तदिति व्यपदेशः। इग्यणः सम्प्रसारणमित्यत्र, काकाज्जा-तः काकः श्येनाज्जातः श्येन, एवं सम्प्रसारणाज्जातो वर्णः सम्प्र-सारणमिति महाभाष्योक्तेः । सन्मूलाः सोम्येमाः सर्वाः प्रजा इति वाक्यशेषाच्च । ब्राह्मणो मुखमित्येवं मुखाज्जातत्वहेतुतः * यथावदच्छ्रुतिस्तद्वज्जीवो ब्रह्मेति भावयेदिति स्मृतेश्च । अथवा-ऽतिदेशोऽयम्। तद्वत् त्वमसीत्यर्थः । बहुगणवतुडति सूत्रे बहुगण-वतुडतयः संख्यावद्भवन्तीति महाभाष्योक्तेः । संस्तवादिति जैमिनीयसूत्रे, आदित्यो यूप इत्यादिकं सादृश्यादित्युक्तत्वाच्च । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति सूत्रे ब्रह्मगुणयोगाज्जीवे तदिति व्यपदेश इत्युक्तत्वाच्च । भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः * प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वश इति स्मृतेश्च । अन्यथा तत्त्वमसीति वाक्यस्याबोधकतापत्तिः । यथोक्तं महाभा-ष्ये, यो गामश्व इति ब्रूयान्न जातुचित सम्प्रत्ययः स्यात् । यद्वा शाखासदेशे चन्द्रे शाखाशब्दवज्जीवान्तर्यामितया जीवसदेशे ब्रह्मणि त्वमिति व्यपदेशः । य आत्मनि तिष्ठन्नित्यादिश्रुतेः । यद्वा, ब्राह्मणो वै सर्वा देवता इत्यादिवज्जीवाश्रयत्वाद् ब्रह्मणि त्वमिति व्यपदेशः । यद्वा ब्रह्मणः सर्वकर्तृत्वाद्, यजमानः प्रस्तर इत्यादिवत्त्वमिति व्यपदेशः । एवञ्च, तदधीनत्वतादेश्यतात्स्थ्य-ताद्धर्म्यपूर्वकैः * निमित्तैस्तत्त्वमस्यादिसामानाधिकरण्यधीः । नचैवं मुख्यार्थत्यागदोष इति शङ्क्यम् । अन्तर्यामिणि त्वमित्यादे-

मुख्यत्वात् । त्वद्रीत्या पदद्वयलक्षणातो मद्रीत्या एकपदलक्षणाया ज्यायस्त्वाच्च । किञ्च जहदजहल्लक्षणाया वाच्यान्तर्गतत्वेन प्राग्धीस्थस्याप्यनन्तरमनुपपत्तिदर्शनेन त्यक्तस्य पुनः स्वीकारः । अजहल्लक्षणायां तु प्राग्धीस्थस्याप्यत्यक्तस्यैव स्वीकारः । त्यक्तस्वीकारादपि वरं प्राग्धीस्थस्वीकारः । एवञ्च, एकया मुख्यवृत्त्यैव तत्त्वमित्यस्य सम्भवे * भेदेनैवैक्यपरताऽनेकलक्षणया कुतः । नच, सदेवेत्यादिवाक्ये लक्षणया प्रकृते शुद्धेऽप्रकृतवाचिनस्तत्पदस्याभिधेवेति वाच्यम् । शुद्धस्याऽवाच्यत्वात् । यद्वा, तेन त्वमिति, तस्मै त्वमिति, तस्मात्त्वमिति, तस्य त्वमिति, तस्मिंस्त्वमिति वार्थः । सुपां सुलुगित्यादिसूत्रात्तृतीयाविभक्त्यादेर्लुक्, प्रथमैकवचनाऽऽदेशो वा । अनेन जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति, सन्मूलाः सोम्येमाः सर्वाः प्रजाः, ऐतदात्म्यमिदं सर्वमित्यादिवाक्यशेषात् । यद्वा, तस्य त्वमित्यर्थे तत्त्वमिति समस्तं पदम् । यद्वा ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा तत्त्वमसीत्यत्र नात्मा परामृष्यतेऽपि तु वस्तु। ऐतदात्म्यमिति नपुंसकलिङ्गत्वात् । एष चासावात्मा च एतदात्मा। तस्येदमैतदात्म्यम्। एतदीयं वस्तु त्वमसीत्यर्थः । परमते, एतत् आत्मा यस्य तदैतदात्म्यमिति व्याख्याने भावप्रत्ययो व्यर्थः । ततो वरमर्थान्तराश्रयणम् । यतो विचित्रा तद्धितगतिरिति वचनम् । संस्रष्टा चैष संहर्ता नियन्ता रचिता हरिः * तेन व्याप्तमिदं सर्वमैतदात्म्यं ततो विदुरिति स्मृतेश्च । अथवा, स आत्मा—तत्त्वमसि इत्यत्र द्वेधा पदच्छेदः संभवति । तथाहि, शब्दो—नित्य इत्यत्रानित्यघटदृष्टान्तेनानित्य इति छेदवद्, अतत्त्वमसीतिच्छेदः।तथाच श्रुत्यन्तर, यथा मही च सूत्रं च नानावृक्षरसा यथा * यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा यथा स्तेनापहार्यौ च यथा पुंविषयावपि * तथा जीवेश्वरौ

भिन्नौ सर्वदैव विलक्षणाविति । एवञ्च, वाक्यशेषानुसारेण मुख्यार्थस्यैव सम्भवे * तद्विरोधेनैकपदलक्षणा नैव युज्यते । नचैक्यस्याप्रसक्तेरतत्त्वमसीतिनिषेधायोगः । इष्टापूर्त्तं मन्यमाना वरिष्ठमित्यादाविव श्रुतितात्पर्यापरिज्ञानेन वा, तद्धैक आहुरसदेवेदमग्र आसीदित्यादाविवादिसमये देहेन्द्रियादीन् प्रति स्वाङ्गपरूपस्य ईश्वरलक्षणस्य सर्वैरपि स्वात्मन्यभिमन्यमानत्वेन प्रत्यक्षेण वा प्रसक्तस्यैक्यस्य निषेधोपपत्तेरित्याहुः । तदसत् । बहुश्रुतिविरोधात् । उपक्रमविरोधाद् दृष्टान्तविरोधाच्चाऽतत्त्वमसीति छेदस्य वक्तुमशक्यत्वात् । यत्तु माध्वैरद्वैतश्रुतीनाम् अवतारपरत्वमङ्गीकृत्य श्वेतकेतोरवतारत्वं वदद्भिरिदं वाक्यमवतारपरत्वेन योजितम् । तन्न । श्वेतकेतोरवतारत्वाभावात् । पूर्वं स्तब्धत्वादिदोषकथनात् । एवञ्च यथा ऐतदात्म्यमित्यत्र न भागत्यागलक्षणा सदंशे, तथोत्तरत्रापि चिदंशे न सेत्यवगतव्यम् । धर्मतिरोधानस्य भगवदिच्छया जातत्वात् । इदञ्च, ऐतदात्म्यमिदं सर्वं, तत् सत्यं, स आत्मा, तत्त्वमसि श्वेतकेतो इत्येकादशपदात्मकस्य उपदेशत्वात् सम्पूर्णमहावाक्यमुपदेशः । न तु शङ्करभाष्योक्ताष्टपदात्मकस्तत्सत्यमित्यादिः । उपक्रान्तस्य तावतैव पूर्त्तेरित्युक्तम् । तस्मान्महावाक्यैकदेशस्तत्त्वमसीति न जीवब्रह्मणोरैक्यं बोधयति । एकांशस्य जीवब्रह्मणोरभेदबोधकत्वमपरस्य जडब्रह्मणोर्भेदव्यासेधकत्वमित्येवं विभागे साकाङ्क्षत्वाभावेन वाक्यभेदप्रसङ्गात् । यदि चात्र प्रकारभेदेन ब्रह्माभेद एव बोध्यत इति न वाक्यभेद इति विभाव्यते तथाप्युपक्रमविरोधस्य दुष्परिहरत्वेन व्याख्यानस्य दुष्टत्वानवगमः । ननु वाक्यभेदस्यादूषकत्वेनैतावन्मात्रं जीवस्य ब्रह्मतां बोधयति । तच्च साक्षादनुपपन्नं सद् भागत्यागलक्षणयाऽखण्डमेव वाक्यार्थं बोधयिष्यतीति चेन्न । शब्दाद् अपरोक्षस्य पूर्वमेव निरस्तत्वात् । अन्यस्य

च फलत्वाभावात् । नन्वस्तु संसारनिवृत्तिरेव फलमिति चेत् तर्हि सांख्यादिस्मृत्यैव देहादिभेदबोधनात्तयैव गतार्थत्वमप्यनुसन्धेयम् । तस्मात् प्रकरणभेदमप्यङ्गीकृत्य महावाक्यत्वेनोपदेशं प्रशासन्तो बकबन्धप्रयासमनुहरन्तीति । तस्मादुक्तमेव व्याख्यानं युक्तम् ॥

यत्तु कश्चित्— नांशत्वेनैक्यसिद्धिः । तथाहि । नचांशो ह्येष परमात्मनः, पादोऽस्य विश्वा भूतानीति, ममैवांशो जीवलोके जीवभूतः सनातनः, अंशो नानाव्यपदेशादित्यादिश्रुतिस्मृतिसूत्रेष्वंशोक्त्यैक्यम् । अयं ज्येष्ठांशः, अयं कनिष्ठांशः, चैत्रस्य चतुर्थांशबलो मैत्रः, अनर्घस्यास्य रत्नस्यायं सहस्रांश इत्यादिवन्मार्गविन्यस्तचैत्रपदाकृता चैत्रपाद इतिवच्च भेदेनैवोपपत्तेः । किञ्च, ब्रह्म प्रति जीवस्यांऽशत्वं तावदारम्भकत्वं वा, खण्डत्वं वा, समुदायित्वं वा, प्रदेशत्वं वा, अत्यन्ताभिन्नत्वं वा, भिन्नाभिन्नद्रव्यत्वं वा । नाद्यः । ब्रह्मणोऽनादित्वात् । न द्वितीयः । अच्छेद्यत्वात् । न तृतीयः । समुदायस्य समुदाय्यनन्यत्वेन व्यवहारदशायामपि संसारिजीवान्यशुद्धब्रह्माभावापातात् । न तुरीयः । खण्डपटस्य पटदेशं ब्रह्म प्रत्यकल्पितस्य तस्यायोगात् । न पञ्चमः । तत्रांशशब्दायोगात् । पटाद्भिन्ने पटांशत्वव्यवहाराच्च । न षष्ठः । अनङ्गीकारात् । किन्तु तत्सदृशत्वे सति ततो न्यूनत्वं जीवस्यांशत्वं, न तु तदेकदेशत्वमित्याह ।

तन्न । मुख्ये संम्भवति गौणस्यान्याय्यत्वात् । यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मन इत्यादिश्रुतेश्च । न चाऽशत्वं बाधकं, कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेत्याशङ्क्य,श्रुतेस्तु, शब्दमूलत्वादिति सूत्रप्रणयनादिति दिक् ॥ ननु तर्हि किमुपदेशत्वमिति चेत् शृणु । जीवजडयोः परस्परं वैलक्षण्यं बोधयितुं जीवजडौ प्रत्यङ्‌ निर्दिश्य परस्परं भिन्नमपि तदुभयं ब्रह्माभिन्नमिति ज्ञापयितुं

पूर्वोक्तरीत्या ब्रह्मना निरूपिताऽतस्तद्वाक्यस्य ब्रह्मणः सर्वरूपत्वे पर्यवसान, न तु जीवब्रह्मणोरैक्यमात्रे इति। किञ्चात्र, न लौकिकयुक्त्या भेदप्रतिपादनं सम्भवयुक्तिकम् । ब्रह्मण औपनिषदत्वात् । तस्य च बोधो न शब्दसाधारणविद्यया भवति, किन्तु तपसा ब्रह्म विजिज्ञासस्व, न्यग्रोधफलमाहर, यमेवैष वृणुते, तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमित्यादिश्रुत्युक्ततपोवेदयुक्तिभगवत्प्रसादादिसहकृतविद्ययेति । अन्यथा, कं ब्रह्म खं ब्रह्मेत्युपाख्याने कथमुपदेशमात्रेण बोधः। कथमिदानीन्तनानामबोधः । इदानीन्तनानामप्यस्तीति चेत् । तथा सति सर्वज्ञताऽलौकिकत्वेजनी स्याताम् । नन्वेवमप्यभेदबुद्धिरूपायां विद्यायामेवेश्वरप्रसादादेर्भक्तेश्चोपक्षयः प्राप्त इति चेन्न । विद्यया नष्टाया अप्यविद्यायाश्चरमवृत्तिनाशे पुनरुत्थानसम्भवात् । जातस्य हि ध्रुवो मृत्युरिति वाक्याज्जन्यभावस्य नश्वरत्वान्नष्टस्य चोत्पत्तिमत्त्वाच्च । अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यत इति गौडवार्त्तिके प्रबोधोत्पत्त्यङ्गीकाराच्च । तस्मात् सर्वथा अविद्यानाशार्थं भक्तेरावश्यकत्वान्नाभेदबुद्धिरूपविद्यायां शास्त्रपर्यवसानमपि तु भक्त्याविसस्य वाक्यस्य विद्याजनकत्वाभावान्न महावाक्यत्वमिति फलितम् । नच भक्तेरपि जन्यत्वात्तद्दोषतादवस्थ्यमिति शङ्क्यम् । भक्तेर्नित्यत्वस्योपपादयिष्यमाणत्वात् । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति कारणनिवृत्तिबोधनाच्च। अत एव, न मायोत्थानमपीति कुतोऽविद्योत्थानमिति सर्वं सुस्थम् । तदुक्तं निबन्धे, तस्माज्ज्ञानपि नो मुक्तिर्जाग्रत्स्वप्नवदुद्भवः * अविद्याविद्ययोस्तस्माद् भजनं सर्वथा मतमिति । यद्वा, विद्यायाः पञ्च पर्वाणि । वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे * पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेदिति । एवञ्च विद्यायामपि भक्तिप्रवेशाद्

भक्तिसहिताया एव विद्याया अविद्यानाशकत्वं, न तु केवलायाः। अत एव, नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् * कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यऽकारणमिति केवलं ज्ञानं निन्द्यतेऽवस्तुतस्तु विद्याया अक्षरपर्यवसानमुपपादितमिति न शङ्कालेशः । दहराधिकरणे जीवब्रह्मवादस्य खण्डनादधिकं ततोऽवगन्तव्यम् ॥

स्यादेतत् । यदेव विद्यया करोति तत्तदेवास्य वीर्यवत्तरं भवति, ब्राह्मिष्ठो ब्रह्मा तं दर्शपूर्णमासयोर्वृणीतेतिश्रुतिकल्पश्रुतिभ्यां तस्याङ्गिभूतकर्मापेक्षा, वेदस्य चाऽङ्गभूतज्ञानापेक्षेति तादृशज्ञानबोधकत्वेन वेदान्तानां कर्तृशेषत्वादस्त्वेकवाक्यतेति। तथा भट्टकारिका । स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया * वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति । किञ्च, इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तिता भाष्यकृदत्र युक्त्या * दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेनेति भट्टोक्तं प्रकारान्तरमप्येकवाक्यतायाम् । अथान्यदपि, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीति श्रुत्या वेदापेक्षा वेदान्तानां सिद्ध्यति । एवञ्च वेदस्यान्तो यत्रेति व्युत्पत्त्या वेदोत्तरभागत्वाद्वेदान्त इति प्रसिद्धिरपि युज्यते इति ॥ अत्र वदामः ॥ यदेव विद्ययेति श्रुतेरुद्गीथप्रकरणीयत्वेन विद्यान्तरासङ्ग्राहकत्वात् । उद्गीथविद्यायाः कर्माङ्गत्वेऽपि अक्षतेः। एवं ज्ञाननिष्ठाय देयानि कव्यानीति वाक्ये यथा पितॄणां तृप्त्यानन्त्याय ज्ञाननिष्ठाय कव्यदानोक्तिः । नैतावता श्राद्धाङ्गत्वं ज्ञानस्य युक्तम् । दानं फलानन्त्येन कर्त्रनुग्रहार्थम्। सम्प्रदानताया अनुमतिमात्रत्वात् । अन्यथा ज्ञानी कव्यानि भुञ्जीतेति विदध्यादेव । तथा ब्रह्मेति श्रुतावप्यनुमतिरेव क्रियते । ब्रह्मदृष्ट्या कर्मवैषम्यानिवृत्त्या तदनुग्रहार्थम् । स्तुतयेऽनुमतिर्वेति व्याससूत्रा-

त् । वस्तुतस्तु ब्रह्मशब्दस्य वेदवाचकत्वमपीति ब्रह्मशब्दो वेदं वदन्तो न वेदान्तानां कर्मशेषत्वसिद्धिः । अत एव वेदाध्ययनमात्रवतः कर्मण्यधिकारो, न तु ब्रह्मविद इति वक्तुमध्ययनमात्रवत इति सूत्रितमाचार्येण । यदप्युक्तम्, इत्याहेत्यादिना । तत्र, स्वाध्यायोऽध्येतव्य इत्याद्यध्ययनविधिना गृहीतानां वेदान्तानां वेदशेषत्वसिद्ध्यै यत्तावदविनाशी वा अरेऽयमात्मेत्यादिना शरीरादिभिन्नत्वेन जायमानं नित्यात्मज्ञानं तस्य पारलौकिकफलकर्मानुष्ठानौपयिकत्वात् कर्मज्ञानवदेव सामर्थ्यतः क्रतुसंयोगात् क्रत्वर्थत्वम् । अथ शरीरादिभिन्नात्मज्ञानं नैयायिकादियुक्तिसिद्धमिति विभाव्यते तदापि यथैवान्यतः क्रतुज्ञानसम्भवेऽपि अध्ययनोपात्तवेदवाक्यावगतकर्मरूपाणामेव पुंसां कर्मस्वधिकारस्तथैवाऽध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेवाधिकार इत्यध्ययनविधिबलादेव कल्प्यत इति न दोषः। यत्त्वात्मसद्भावप्रतिपादनोपक्रमे, आत्मा वा अरे द्रष्टव्य इत्यादि विधिवाक्यम् । तत्तु वक्ष्यमाणार्थस्याऽतिगहनत्वान्महोपयोगित्वाच्च नालस्यपूर्वकं, श्रद्धाविशेषेण कृत्वा वक्ष्यमाणार्थप्रतिपत्तिमात्रार्थम् । अतोऽस्य ज्ञानस्य दृष्टोपयोगाभावाददृष्टफलत्वम् । तच्चाऽभ्युदयरूपं निःश्रेयसरूपं च । सोऽश्नुते सर्वान् कामानिति श्रुतेः, न स पुनरावर्त्तत इति श्रुतेश्च । यदपि, विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति श्रुतौ नाशकथनं तदपि अत्रैव मा भगवानित्यनेन पूर्वोक्ताऽजराऽमृतत्वस्य विनाशित्वाऽभिधानतो बाधात् पूर्वपक्षम् उत्थाप्य, न वा अरे मोहमहं ब्रवीम्यविनाशी वारेऽयमात्मानुच्छित्तिधर्मेत्युक्त्वा मात्रासंसर्गस्त्वस्य भवतीति कथनेन मात्राशब्दवाच्यात्मभूतेन्द्रियधर्माणां सम्बन्धबोधनेन विज्ञानघनशब्दोक्तो ज्ञानशक्तिस्वभाव आत्मा एतेभ्यः

समुत्थाय मुक्तोऽव्यक्तो भूत्वा तान्येवानुविनाशाद्विनष्ट इव भवति । भूतसंस्थो ह्यसौ स्वयं प्रत्यक्षेण गृह्यते, इतरैश्च शरीरचेष्टादिलिङ्गकानुमानेन । मुक्तस्तु प्रमाणमार्गातिवर्त्तनाद्विनष्ट इव भवतीति प्रकारेण मात्राणामेव नात्मन इति। तदुक्तम्, अविनाशी स्वरूपेण पुरुषो याति नाशिताम् * मात्राणां सविकाराणां भूतादीनामसंज्ञितेति ॥ अत्र हि मुक्तस्य ज्ञानाभावो बोध्यते । भूतेन्द्रियादिवियोगेन करणाभावात् । वस्तुतस्तु प्रकरणार्थोपसंहारोऽयम् । यतो भूतेन्द्रियाणामचेतनत्वम् । अन्यस्य तु तेभ्यो नित्यचेतनस्य स्वर्गगमनसम्भवान्न स्वर्गं लोकं यातीत्यस्य प्रत्यक्षस्य विरोध इत्येवमेकवाक्यतेति भट्टाशयः । सोऽतिरभसात् । शाबरभाष्ये नैयायिकाद्युक्तयुक्तिभिरेवात्मसिद्ध्या, अविनाशी वा इत्यादिश्रुतिसन्दर्भस्य नास्तिक्यनिराकरणेऽपेक्षाभावात् । एतदुपक्रमे, येनाहममृता स्यां किमहं तेन कुर्यामिति मोक्षार्थत्वस्य श्रावणात् । प्रियत्वकथनमपीतरत्र वैराग्यार्थमिति तस्यापि संसारिलिङ्गत्वाभावात् । आत्मज्ञानेन सर्वज्ञानश्रावणं स्तुत्यर्थमित्यपि न । ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेदेति श्रुतेः । अध्ययनवाक्ये न विधिः, किन्त्वावश्यकार्थस्तव्यः । तदुपपादितं जिज्ञासासूत्रे । अत एव चाहुः । तव्यस्त्वावश्यके प्रोक्तो न विधिर्ज्ञातृबोधनादिति पत्रावलम्बने । अर्थज्ञानं तु गुरुकृतज्ञापनात् सामान्यतः । तपआदिभ्यः साधनेभ्यो मीमांसाद्वयमहितेभ्यश्च विशेषतो भवतीति । इदमपि जिज्ञासासूत्रे एवोपपादितम् । अर्थज्ञानं च द्रव्यमात्रानुष्ठानोपयोगि । आश्रमचतुष्टयधर्मार्थत्वात् । अन्यथा तद्बोधकप्रमाणवैयर्थ्यापत्तेः । तथा धर्मोऽपि न धर्मत्वेन रूपेण वेदार्थः । किन्तु वेदार्थब्रह्मात्मकत्वेन यज्ञो वै विष्णुरिति, धर्मो यस्यां मदात्मक इति, सर्वे वेदा यत्पदमामनन्तीति, वेदैश्च सर्वैरहमेव वेद्य

इति श्रुतिस्मृतिभ्यः । एवं च विधिपक्षेऽपि ब्रह्मोपक्रम्य प्रोक्तस्यातिदुरूहत्वात्तदर्थं, न तु निःश्रेयसरूपत्वात् । यदपि, न प्रेत्य संज्ञास्तीत्यनेन मोक्षदशायामात्मनः करणाभावाज्ज्ञानशून्यत्वमुच्यत इत्युक्तम् । तदपि फल्गु। अनुच्छित्तिधर्मेत्यनेन तत्रैव धर्मानुच्छित्तिमुक्त्वा, यद्वै तन्न पश्यति पश्यन् वै तद् द्रष्टव्यं न पश्यतीत्यादिना कारणाभावेऽपि स्वत एव दर्शनस्य विभक्तपदार्थाभावेनान्याऽदर्शनस्य चोक्त्या स्वतोऽविभक्तदर्शनस्यैव व्युत्पादनात् । वस्तुतस्तु ब्रह्मप्रकरणमिदम् । वाक्यान्वयाधिकरणे तथैव सिद्धत्वात् । उक्तश्च पुरस्तात् । अतो नात्र जीवात्मसत्तासाधनगन्धोऽपीत्यन्यदेतत् । अथान्यद्यदुक्तं, तमेतं वेदानुवचनेनेत्यादिना । तन्न । लौकिकत्वेन प्रतीतिविषयस्य व्रीह्यादेः संस्कारेणाऽलौकिकत्वमिव वेदान्तेष्वप्युक्तरीत्या जगतो ब्रह्मत्वं विधाय मोक्षणवत् साधनाऽनुक्त्याऽर्द्धजरतीयन्यायाद्वेदान्त इति प्रसिद्धिसम्भवे, तामादाय श्रुतिस्मृतिविरुद्धान्यार्थताङ्गीकारस्यायुक्तत्वात् । तमेतमिति वाक्ये यज्ञादीना विविदिषापर्यन्तत्वश्रावणाच्च। विविदिषामात्रस्य ब्रह्मज्ञानजनकत्वाभावात् । अतो न कथमपि वेदवेदान्तैकवाक्यतेति पूर्वोक्त एवैकवाक्यताप्रकार उपादेयः। तस्मात्सर्वोऽपि वेदो भक्तिप्रतिपादक इति सिद्धम् ॥

एवं गीतायाश्च भक्तौ तात्पर्यं ज्ञेयम्। तथाहि— कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ❋ यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमितिवाक्याद् आत्मनिवेदिनेऽर्जुनाय,

ब्रह्मभूतः प्रसन्नाऽऽत्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्—

इत्यन्तेन वक्ष्यमाणां मुख्यभक्तिं सपरिकरां निरूपयितुं चित्तशु-

द्धर्थे कर्मयोगं स्नेहार्थं सांख्ययोगमात्मानात्मविवेकाय स्वरूपयोग्यतार्थं ज्ञानं च सपरिकरं द्वितीयादिभिः सप्तभिरुक्त्वा, नवमे, इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे इति प्रतिज्ञाय, महात्मानस्तु मां पार्थ दैवी प्रकृतिमाश्रिताः * भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति भक्तिमुक्त्वा, मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु * मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण इत्युपसंहृतवान् । तत्र, ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते * एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमित्यादिनाऽन्यमाङ्कुर्यस्य मत्त्वं निरूप्य दशमे, भूय एव महाबाहो शृणु मे परमं वच इत्युपक्रम्य सुदृढस्नेहायात्मानात्मविवेकस्य सांख्ययोगनिरूपणेन निरूपितत्वेन. न मे विदुः सुरगणाः प्रभवं न महर्षय इत्यादिनाऽवज्ञादिदोषाभावाय स्वमाहात्म्यं निरूपयन्, अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते * इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् * कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च * तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् * ददामि बुद्धियोगं तं येन मामुपयान्ति ते इति स्वभजनेन बुद्धियोगरूपं स्वसाक्षात्कारमुक्त्वा तेन तमस्तरणमुक्त्वाऽर्जुनपृष्टविभूतीर्निरूपयत् । एकादशे विश्वरूपं प्रदर्श्य द्वादशे, एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते * ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा इत्यर्जुनप्रश्ने, मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते * श्रद्धया परयोपेतास्ते मे युक्ततमा मता इत्यादिनाऽक्षरोपासनातः स्वोपासनाया उत्कर्षम्, अथ चित्तं समाधातुमित्यादिना भक्त्यनुकल्पान्, अद्वेष्टा सर्वभूतानां मैत्रः करुण एव चेत्यादिना ज्ञान्यपेक्षया भक्तोत्कर्षं चोक्तवान् । ततस्त्रयोदशे

प्रकृतिपुरुषक्षेत्रज्ञादि ज्ञातुं पृष्टस्तल्लक्षणानि उक्तवान् । चतुर्दशे ज्ञानं चोक्तवान् । एतेषां भक्त्युपयोग इति, इति क्षेत्र तथा ज्ञानं ज्ञेयं चोक्तं समासतः * मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यत इति वाक्याज्ज्ञेयः । एवं प्रासङ्गिकं परिहृत्य पञ्चदशे स्वस्य सर्ववेद-वेद्यत्वं पुरुषोत्तमत्वं, तज्ज्ञाने कृतकृत्यत्वं चोक्त्वा षोडशे चासुर निषेधद्वाराऽधिकारिणः स्वरूपतो निर्णीय, सप्तदशे हीनाधिकार्युपा-सनमुक्त्वाऽष्टादशे संन्यासादिकं निरूप्य, समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा * बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य चेत्यादिना विशुद्धबुद्ध्यादीनुक्त्वा, निर्मुच्य निर्ममः शान्तो ब्रह्म-भूयाय कल्पते * ब्रह्मभूतः प्रसन्नाऽऽत्मा न शोचति न काङ्क्ष-ति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परामित्यनेन ब्रह्मज्ञानिनो भक्तिकथनेन ज्ञानाद्भक्तेरुत्कर्षं बोधयित्वा, भक्त्या मामभिजाना-तीत्यनेन भक्त्या स्वसाक्षात्कारमुक्त्वा ज्ञानमार्गीयज्ञानशङ्कावार-णाय, सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः*मत्प्रसादादवा-प्नोति शाश्वतं पदमव्ययमित्यनेन भक्तिमार्गीयप्रसादस्य कारण-तामुक्त्वा पुनः सर्वगुह्यतमं प्रतिज्ञाय, मन्मना भव मद्भक्तो मद्-याजी मां नमस्कुरु* मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे इत्यनेन भक्तिं, सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज * अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इत्यनेन प्रपत्तिं चोक्त्वोप-सञ्जहार । तेन गीताया अपि भक्तावेव तात्पर्यमिति निश्चयः । नचात्र प्रपन्नमित्यत्र प्रपत्तिर्या सा न भक्तिरूपा, किन्तु ज्ञानरूपा। गत्यर्थस्य धातोः सोपसर्गस्य ज्ञानार्थकत्वात । अवगम्यत इत्यादौ तथैव दृष्टत्वात् । किञ्च, ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषत इत्युपक्रम्य मामेव ये प्रपद्यन्त इति, बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत इति कथनात् । ते विदुर्युक्तचेतस इत्युपसंहाराच्च

प्रपत्तिर्ज्ञानं भवितुमर्हति । अत एव तस्या आकारमाह, वासुदेवः सर्वमिति । तथाच पूर्वोक्तं सर्वं विरुद्धमिति वाच्यम्। गत्यर्थकस्य सोपसर्गस्य धातोर्ज्ञानार्थत्वस्य, निर्गच्छति, निगमयतीत्यादौ व्यभिचारदर्शनात । अत एव, प्रपद्यते भजतीति श्रीधरस्वामिनः । किञ्च, ज्ञानं तेऽहं सविज्ञानमिति नोपक्रमश्लोकः, किन्तु, मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः * असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणिवति । तत्र पूर्वाध्यायान्ते, तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः * कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ योगिनामपि सर्वेषां मद्गतेनान्तरात्मनेत्यंशं मय्यासक्तमना इत्यनेनानूद्य, तेन च भक्तत्वज्ञानं स्फोरयित्वा तदुपयोगि तेऽहं सविज्ञानमित्यनेन, ज्ञानं कथं न भवतीत्याकाङ्क्षायामाह त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत * मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ दैवी ह्येषा गुणमयी मम माया दुरत्ययेति मायया स्वाज्ञानमुक्त्वा कथं मायातरणं, येन ते ज्ञानं भवेदित्याकाङ्क्षायां, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति । एवञ्च यदि प्रपत्तिर्ज्ञानं तदा ज्ञानेन मायातरणं, तेन च ज्ञानमिति वाक्यार्थ एव विरुद्ध्येत ।भक्त्यर्थकत्वे तु वाक्यार्थविरोधः। भक्त्या मामभिजानातीतिस्मृतिश्च संगृहीता। ततो, न मां दुष्कृतिनो मूढा इत्यनेनासुरान्निभर्त्स्य, चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन * आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेत्युक्त्वा तेषां मध्ये ज्ञानी श्रेष्ठः। स च न शुष्कज्ञानः। नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनमिति वाक्यात् । किन्तु भक्तिविशिष्ट इति वक्तुं— तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इत्युक्त्वा श्रैष्ठ्ये हेतुमाह । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इति। तर्हि किमार्तादिभक्तानां संसारस्तत्राह । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे

मतम् * आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् इति । तदनन्तरं पूर्वोक्तभक्तं स्तौति । बहूनां जन्मनामन्ते, वासुदेवः सर्वमिति ज्ञानवान् मां प्रपद्यते इत्यन्वयः । तथाच न प्रतिस्वरूपं— वासुदेवः सर्वमिति, किन्तु ज्ञानस्वरूपम् । अग्रे च क्षुद्रदेवतोपासकानां संसारमाह स्वभजनमुख्यत्वसिद्ध्यै । कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् ॥ अन्तवत्तु फलं तेषां तद् भवत्यल्पमेधसाम् । देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपीत्यादिना । अग्रे, येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् * ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्मचाखिलम् । साधिभूताधिदैवं मां साधियज्ञं च ये विदुः । प्रयाणकालेऽपि च ते मां विदुर्युक्तचेतस इति भक्तस्य ज्ञानमुक्त्वोपसंजहार । तेनोपक्रमोपसंहाराभ्यां नात्र प्रपत्तिशब्दवाच्यं ज्ञानमिति निश्चयः ॥

श्रीपुरुषोत्तमैस्तु— सप्तमाष्टमाभ्यां सपरिकरं ज्ञानं निरूप्य ततो नवमे, इदं तु त गुह्यतमं प्रवक्ष्याम्यनसूयवे इति गुह्यतमत्वेन भक्तिनिरूपण प्रतिज्ञाय, राजविद्या राजगुह्यमिति पञ्चमीतत्पुरुषघटितपदेन राजविद्या राजगुह्यं चेत्युभयं प्रतिज्ञातम् । अन्यथा, संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसीति फलसम्बन्धमुक्त्वा समोऽहं सर्वभूतेषु इत्यादिना भक्तिं वदन्, मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण इति पुनः फलोक्तिर्वृथा स्यात् । राजविद्याराजगुह्ययोग — इत्यध्यायनाम च युज्यते । तस्मान्मया तत्तमि-

आरभ्य, शुभाशुभफलैरेवं मोक्षसे कर्मबन्धनैः * संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि इत्यन्तेन राजविद्यां निरूप्य, समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः * ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ अपि चेत् सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा । अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण इत्यनेन गुह्यतमत्वेन भक्तिरुक्ता । तेन भक्तिशब्दगुह्यतमशब्दयोः सामानाधिकरण्यं सिद्ध्यति । अष्टादशे च । सर्वगुह्यतमं शृण्विति प्रतिज्ञाय, सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्युक्तम् । तत्र च गुह्यतमशब्दप्रपत्त्यपरपर्यायशरणगमनयोः सामाधिकरण्यं सिद्ध्यति । तथाच यदि प्रपत्तिशब्देन ज्ञानमभिप्रेयात्तर्हि भक्तिगुह्यतमयोः सामानाधिकरण्यमुक्त्वा, गुह्यतमप्रपत्त्यपरपर्यायशरणगमनयोः सामानाधिकरण्यं न ब्रूयात् । तस्मात् प्रपत्तिर्भक्तिरिति निश्चय इत्युक्तम् । नच धात्वर्थबाधः शक्यशङ्क इति वाच्यम् । गत्यर्थकधातूनां प्राप्त्यर्थकत्वेन प्राप्तेश्च सम्बन्धविशेषत्वेन साक्षाद्भगवत्सम्बन्धस्य प्रपत्तिशब्देन सुखलभ्यत्वात् । स चान्यथानुपपद्यमानो, मामेव ये प्रपद्यन्त इत्यादौ प्रकरणसहकारेण विद्यापर्वरूपां भक्तिमाक्षिपति । येन विना यदनुपपन्नमिति न्यायाद् भक्तिशास्त्रोक्तरीत्यैवेति श्रवणादिवन्मुख्यभक्तिमध्यपाताद्भक्तिः । अतो न लक्षणा पूर्वसन्दर्भविरोधौ । अत एव, न्यासादेशीयविवरणे शरणग-

मनस्य मर्यादापुष्टित्वमुक्तम् । तेन, मामेकमेव शरणमात्मानं सर्व-देहिनाम् * याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयमित्यत्र सर्वात्मभावस्यापि शरणगमनात्मज्ञानाङ्गत्वमिति यत्फुल्लयमानः परास्तः । तेनात्र न आशङ्कांश इति दिक् ॥

एवं व्याससूत्रेऽपि द्रष्टव्यम् । तथाहि । माहात्म्यज्ञानार्थं समन्वयाध्याये स्मृत्यर्थनिर्णयपूर्वकं युक्तिश्रुतिविप्रतिषेधपरिहार-बाह्यमतनिराकरणवैदिकपदार्थक्रमस्वरूपविचारेभ्यः पादद्वयेन विरोधं परिहृत्य साधनाध्यायेऽधिकारिजन्मब्रह्मभावाप्तियोग्यताविधारणपूर्वकं विषयावधारणप्रकारबोधनौकार्यार्थं गुणोपसंहारानुक्त्वा, चतुर्थपादे, पुरुषार्थोऽतः शब्दादिति बादरायण इत्यनेन सर्वात्मभावतः पुरुषार्थ इत्युक्तवान् क्रियोपसंहारं च । फलाध्याये पुनः कर्ममार्गतत्फलपुष्टिमार्गीयमर्यादामार्गीयसद्योमुक्तिप्रकारक्रम-मुक्तिनिर्गमनद्वारनिःसृतब्रह्मप्राप्तिमार्गतल्लोकतत्प्राप्तिप्रकारफलानुभवप्रकारानुक्तवान् भगवान् व्यासः । तेन सूत्राणामपि भक्तावेव तात्पर्यनिश्चयः ॥

एवं श्रीमद्भागवतेऽपि बोध्यम् । तथाहि । प्रथमस्कन्धेऽधिकारं निरूप्य द्वितीये,

तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयमिति ॥

तत्र यथाकथञ्चन श्रोतव्य, उत सकलधर्मविशिष्ट इति ? । तत्र यथाकथञ्चिच्छ्रवणस्य यतःकुतश्चित् सम्भवादविधेयत्वापात इति दशविधलीलासहितो भगवान् श्रोतव्यः । तत्र सकलधर्मप्रवेशात् । ताश्च, अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः * मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रय इति । तथाच विषयप्रतिपादकत्वेन द्वादशस्कन्धानामुपयोग इति सर्वमपि श्रीमद्भागवतं

भक्तितात्पर्यकम् । यद्वा, यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे * भक्तिरुत्पद्यते पुंसां शोकमोहभयापहेति भागवतस्य भक्त्युत्पादकत्वश्रवणात् । समाधिभाषायां च, भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले * अपश्यत् पुरुषं पूर्णं मायां च तदुपाश्रयाम् ॥ यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो व्यासश्चक्रे सात्त्वतसंहितामिति भक्तेरेवानर्थोपशामकत्वदर्शनात् । एकादशे च, भगवदुद्धवसंवादे भक्तिसाधनान्युक्त्वा प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव * नोपायो विद्यते सम्यक् प्रायणं हि सतामहमिति चोक्त्वा, सुगोप्यमपि वक्ष्यामीति प्रतिज्ञाय द्वादशाध्याये, सत्सङ्गस्य स्वप्रापकत्वम् उक्त्वा, केवलेन हि भावेनेत्यादिना मुख्यभक्तेः, तस्मात्त्वमित्यनेन प्रपत्तेश्च कथनेन भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृतेत्यस्योत्तरमाह । ततः श्रीमदुद्धवसंशयाऽनपगमे वेदस्वरूपं प्रतीयमानं वेदार्थं, हित्वा मयि समाधत्स्व मनो मद्भावभावितमिति सिद्धान्तयित्वा पुनः प्रश्नानुरोधेन योगं तत्सिद्धीर्विभूतीर्भक्तिजनकं वर्णाश्रमधर्मं चोक्त्वा ऊनविंशे ज्ञानिनं ज्ञानं च प्रशस्य तस्यापि भक्त्यङ्गत्वं बोधयन्, तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव * ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः इति सिद्धान्तमुक्त्वा पुनर्ज्ञानभक्त्योः प्रश्ने ज्ञानोत्तरत्वेन मोक्षधर्मानुक्त्वा, भक्तियोगः पुरैवोक्त इत्यनेन प्रश्नं पूरयित्वा पुनर्भक्तिकारणानि वदन्, एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् * मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत इत्याह । पुनः प्रासङ्गिकं परिहृत्य विंशैकविंशाभ्यां स्वस्य वेदार्थरूपत्वमुक्त्वा पुनः प्रासङ्गिकं प्रश्नानुरोधि चान्यदपि बहूनुक्त्वाऽञ्जसा सिद्ध्यर्थं पूर्वोक्तस्य सुगोप्यस्य साधनभूतान्

धर्मान् उक्त्वोनत्रिंशे उपसंजहार । सुगोप्यतमं तु पूर्वमेवोक्तमिति मुख्याधिकारित्वात् पुनस्तत्रोत्राचेति तत्र तात्पर्यमूह्यम् ॥

अथवैकबीजत्वाद्वेदवदेव तात्पर्यम् । तथाहि । द्वादशस्कन्धे आश्रयनिरूपणेनात्मतत्त्वस्य शेषैर्नवभिः प्रत्येकं त्रिविधानां प्रलयमुत्पत्तिं स्थितिमाह । माहात्म्यस्य प्रतिपादनेन भक्तेरंशद्वयमुक्तम्। द्वितीये च साधनस्य प्रश्नमधिकारस्य च निरूपणं पूर्ववत् ।तेनात्रापि भक्तौ तात्पर्यं सिद्धमिति मुख्यानां चतुर्णामेकवाक्यतया भक्तिमार्ग एवोत्कृष्ट इति सिद्धम् । तदुक्तं शास्त्रार्थप्रकरणे, वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि * समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयमिति । अन्येषां पुराणानां तु, एकः सन् विप्रा बहुधा वदन्ति, त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्, येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः * तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमिति विभूतिनिरूपणाध्यायेन च वैश्वानराद्यधिकरणैश्च सर्वे सूर्यादयो भगवद्विभूतिरूपा इति तत्प्रतिपादकत्वेन माहात्म्यप्रतिपादकत्वाद्भक्तौ उपयोग इति बोध्यम् ।एतेन वेदान्तानां ज्ञानेऽपि तात्पर्यस्य शक्यवचनत्वान्नैकान्ततो भक्तौ तात्पर्यमवधारयितुं शक्यमिति वदन्तः परास्ताः। पुराणानां वेदार्थनिर्णायकत्वेन तत्र भक्तेरेवोत्कर्षात् ॥

ननु श्रुत्यैव निर्णयः, किं पुराणैरितिचेन्न । तेषामपि वेदतुल्यत्वात् । छान्दोग्ये इतिहासपुराणं वेदानां पञ्चमो वेद इति श्रुतेः ॥ केचित्त्वत्र तान्येवेतिहासादीन्यादाय तेषां पञ्चमत्वमाहुः। तन्मन्दम् । तस्य वेदचतुष्टयान्तर्गतत्वेन पृथक्पाठसंख्ययोर्विरोधात् । तावतो भागस्य क्षिप्तत्वाच्च । पुराणादीनां वेदरूपत्वाभावेनैव वेदार्थनिर्णयासम्भवप्रसक्तेश्च।नच मास्तु तैर्वेदार्थनिर्णय इति वाच्यम् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् * बिभेत्यल्प-

श्रुतीर्द्वेदो मामयं प्रहरिष्यतीति ब्रह्माण्डीयप्रथमाध्यायस्थवाक्यस्य, वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः इति विष्णुपुराणवाक्यस्य, इतिहासपुराणैस्तु कृतोऽयं निश्चलः पुरेति स्कन्दप्रभासखण्डीयवाक्यस्य, नान्यथा ज्ञायते धर्मो ब्रह्मविद्या च वैदिकी ॥ तस्माद्धर्मः पुराणं च श्रद्धातव्यं मनीषिभिरिति कौर्मपञ्चदशाध्यायस्थवाक्यस्य विरोधापत्तेः । नापि व्यासकर्तृकत्वेनावेदतुल्यत्वमिति वाच्यम् । कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो द्विजाः ॥ व्यासरूपमहं कृत्वा संहरामि युगे युगे इति मात्स्यवाक्यात् । ननु तथापि पुराणत्वेन तौल्यात् कथं भागवत एव पुराणानामङ्गत्वम्। वैपरीत्यस्यापि वक्तुं शक्यत्वादितिचेन्न । त्वया खलु पुराणानि सेतिहासानि कृत्स्नशः ॥ आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥ यानि वेदविदां श्रेष्ठो भगवान् बादरायणिः । अन्ये च मुनयः सूत परावरविदो विदुः ॥ वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ॥ तत्र तत्राऽञ्जसा युष्मन् भवता यद्विनिश्चितम् । पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसीति ॥ तथा, अतः साधोऽत्र यत् सारं समुद्धृत्य मनीषया ॥ ब्रूहि नः श्रद्दधानानां येनात्मा सुप्रसीदतीत्यात्मप्रसादकैकान्तःश्रेयोरूपपुराणेतिहासधर्मशास्त्रसारप्रश्नात्, सर्ववेदान्तसारं हि श्रीभागवतमिष्यते इति, सर्ववेदेतिहासानां सारं सारं समुद्धृतमिति वाक्याभ्यां च श्रीभागवतस्य वेदवेदान्तसर्वपुराणेतिहासानां सारूपत्वात् तत्रैव पुराणादीनामङ्गित्वस्यैकान्त्यात् । पुराणोत्तरमप्यपरितोषे तन्निवृत्त्यर्थं नारदोपदेशेनास्य करणाच्च । शुकमध्यापयामासेति श्रुत्वा, स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥ कस्य वा बृहतीमेनामात्मारामः समभ्यसदिति शौनकादिभिः पृष्टः, आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥ कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिरिति सूतो-

त्तरात्, परिनिष्ठितोऽपि नैर्गुण्ये उत्तमःश्लोकलीलया * गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ तदहं तेऽभिधास्यामि महापौरुषिको भवानिति शुकवाक्याच्च । तादृशाधिकारिगृहीतत्वाच्च। नचार्थवादत्वमत्र वाच्यम् । पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः * तैरर्जितानि पुण्यानि तद्वदेव भवन्ति हि । समस्तकर्मनिर्मूलसाधनानि नराधमः । पुराणान्यर्थवादेन ब्रुवन्नरकमश्नुते ॥ यावद् ब्रह्मा सृजत्येतज्जगत्स्थावरजङ्गमम् । तावत् स पच्यते पापी नरकाग्निषु सन्ततम् ॥ अहो वाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते । उच्चारणादेव मुनीन्द्रा नारायणश्चेति तथार्थवादः॥ पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु । प्रवदन्त्यर्थवादत्वं ये ते निरयगामिन इति बृहन्नारदीयप्रथमाध्याये दोषकथनात् ॥

कश्चिद्भगवदुपेक्षितः, अष्टादश पुराणानि कृत्वा सत्यवतीसुतः * चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितमित्यष्टादशपुराणकरणानन्तर्यं भारतस्यायाति। तदनन्तरं भागवतकरणान्नाष्टादशपुराणान्तर्गतं श्रीभागवतमन्यकृतं चेति ब्रुवन्ति स्म । तदति तुच्छम् । यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः * वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥ सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः । तद्वृत्तान्तोद्भवं तच्च पुराणं परिकीर्त्यते ॥ अष्टादशसहस्राणि पुराणं तत्प्रकीर्त्तितमिति मात्स्ये, ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः * हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति स्कान्दे पञ्चमपुराणलक्षणे एतस्यैवोक्तेः । देवीपुराणस्य, लक्षमात्रेण लोकस्य विना देवेन भाषितेति लक्षमात्रत्वात् । अष्टादशपुराणानि कृत्वेति वाक्यविरोधस्तु कालस्याविवक्षितत्वादुपपन्नः । स्कान्दे गङ्गामाहात्म्ये, तदा भागीरथो राजा क क भागीरथी तदा * यदा विष्णुस्तपस्तेपे

चक्रपुष्करिणीतटे इति देव्या पृष्टेन शिवेन, सन्देहोऽत्र न कर्त्त-व्यो। त्रिशालाक्षि सदाऽमले * श्रुतौ स्मृतौ पुराणे च कालत्रय-मुदीर्यते ॥ भूतं भव्यं भवच्चापि संशयं मा वृथा कृथा इत्युत्तर-दानात्। एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि तथेति न्यायात्। परापर-भावस्य विवक्षितत्वे पुराणान्तरस्याऽपि बहिर्भावप्रसक्तिः । तथाहि । मार्कण्डेयारम्भे, भगवन् भारताख्यानं व्यासेनोक्तं महा-त्मना * पूर्णमस्तमलैः शब्दैर्नानाशास्त्रसमुच्चयैरित्याद्युक्त्वा, त-दिदं भारताख्यानं बह्वर्थं बहुविस्तरम् * तत्त्वतो ज्ञातुकामोऽहं भगवंस्त्वामुपागतः, इत्युक्तम् । तच्च भारतानन्तरभावित्वमन्तरेणा-ऽसङ्गतं सन्मार्कण्डेयस्याष्टादशभ्यो बहिर्भावमावहति । तथाग्निपु-राणारम्भे, सूत त्वं पूजितोऽस्माभिः सारात् सारं वदस्व नः * येन विज्ञातमात्रेण सर्वज्ञत्वं प्रजायते इति शौनकप्रश्ने, सारात् सारो हि भगवान् विष्णुरव्यय ईश्वर इत्याद्युक्त्वा पुराणमवतार्य तत्तद्विद्यासारं वदन् प्रसङ्गतो ग्रन्थान्ते गीतासारं प्रवक्ष्यामि स-र्वगीतोत्तरं कृष्णो यमर्जुनायाहेति प्रतिज्ञाय, दैवी ह्येषा गुणमयी, यस्यां जाग्रति भूतानीत्यादीनि कतिचित् पद्यान्येव उक्तवान् । अर्थमात्रोक्तौ तु पद्यानि न वदेत्। अतो भारतोत्तरभावित्वमग्निपु-राणस्यापि सिद्ध्यति । एवञ्च पुराणत्रयबहिर्भावेऽष्टादशानां पूर्वभावाभावाद्, अष्टादशपुराणानीति वाक्यस्यैवासङ्गतत्वाप-त्तिः । ननु सूतोक्त्यनुवादवदिदं योगबलेनादावेव वा, प्राक्क-ल्पीयं वाऽवादीति नानेन भारतोत्तरत्वसिद्धिरिति वाच्यम् । प्र-कृतेऽपि तौल्यात् । ननु परितोषाभावासङ्गतिः । प्राक्कल्पीय-व्यासापरितोषानुवादस्यापि शक्यवचनत्वात् । अथवा, अननम् अनिः । रक्षणमिति यावत् । अष्टादश पुराणानि कृत्वेत्येकं पदं सत्यवतीसुतविशेषणम्। राजानि युधि कृत्वा इत्यत्र, कृत्वा इति योग-

विभागात् कनिप् । एवञ्च योऽष्टादशपुराणरक्षकः स भारतकर्त्तेति पूर्वापरभावमन्तरापि भूतार्थवादोपपत्तिरिति न किञ्चिदेतत् । एतेनैवान्यकृतत्वशङ्कापि परास्तेति दिक् । अन्याशङ्कास्तु श्रीभागवतस्वरूपविषयकशङ्कानिरासवादाद् दुर्जनमुखे चपेटिकां ददतो ग्रन्थाच्च निरसनीयाः । विस्तरभिया च न लिख्यते ॥

प्रकृतमनुसरामः ॥ सांख्यनैयायिकबाह्यमतानां द्वितीयाध्यायद्वितीयपादे रचनानुपपत्तेरित्यधिकरण–महद्दीर्घवद्वेत्यधिकरण–समुदायउभयहेतुकेऽपीत्यधिकरणैर्निराकरणात् । तृतीयाध्यायचतुर्थपादे, पुरुषार्थोऽतः शब्दादिति बादरायण इति सूत्रेण स्वमतमुक्त्वा, शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिरिति षट्सूत्रैर्जैमिनिमतमुपन्यस्य, अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनादिति नवभिः सूत्रैर्निराकरणाच्च भक्तिरेव शास्त्रार्थ इति निश्चयः ॥

इति श्रीविद्वन्मण्डन–श्रीगोकुलोत्सवाऽऽत्मज–गोपेश्वरविरचिते भक्तिमार्तण्डे प्रमाणप्रकरणं संपूर्णतामगमत् ॥ १ ॥

## अथ प्रमेयप्रकरणम्।

अथ भक्तिशब्दार्थं निर्णेतुं प्रमेयप्रकरणमारभ्यते। तत्र केचिद् भक्तेर्ज्ञानविशेषत्वमङ्गीचक्रुः। तन्न। योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया * ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्॥ ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम्। आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्भिमृग्यमित्यादिवाक्येषु ज्ञानाद्भेदकथनाद्, भजामीत्यनुव्यवसायस्थले जानामीत्यनुव्यवसायाभावात्। यस्य तु रागादौ भयेनोपाधिना वा नादृशं ज्ञानं तत्रापि भक्तत्वव्यवहाराय, स म इति वाक्ये भेदेन निर्देशाच्च। किञ्च, श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति वाक्ये श्रद्धायाः कर्माऽङ्गत्वमुच्यते। एवं सति यदि भक्तिः श्रद्धा तदाङ्गश्रद्धायामपि श्रद्धान्तरापेक्षणादनवस्था। नचाङ्गाङ्गिभावनिर्वाहाय श्रद्धायां विशेषाभ्युपगमान्नानवस्थेति वाच्यम्। अप्रामाणिकविशेषाङ्गीकारापेक्षया सर्वाऽनुभवसिद्धभक्तिभेदस्यैवास्थेयत्वात्। नचातिरिक्तत्वे कल्पनागौरवमिति वाच्यम्। प्रामाणिकगौरवस्यादुष्टत्वात्। अन्यथा सुखाभावस्यैव दुःखत्वकल्पनयातिरिक्तदुःखसिद्धिरपि न स्यात्। ननु सुखं नास्ति, दुःखमपि नास्तीति प्रत्ययादतिरिक्तत्वसिद्धिरिचेत् तर्हि ज्ञानभक्त्योरपि भेदस्यानुभाविकत्वेन तुल्यत्वात्। अत एव, शान्तरसादतिरिक्तं दशमं वात्सल्यरसमङ्गीचकार साहित्यदर्पणकारः। एतदुक्तं शाण्डिल्यमर्षिणा, नैव श्रद्धानुसाधारण्यात्, तस्यां तत्त्वेनानवस्थानाद् इति सूत्रद्वयेन। नापि क्रिया भक्तिः। विरुद्धानुव्यवसायात्। प्रयत्नाजन्यत्वाच्च। शाण्डिल्यशतसूत्रीयभाष्य-

कृता तु, या प्रीतिरविवेकानां विषयेष्वनपायिनी * त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु इति वाक्य विषयसप्तम्या प्रीतेः सविषयत्वं मन्तव्यम्, न च विषयजन्या प्रीतिरित्यर्थः सम्भवति। जनकसप्तम्या अननुशासनादित्युक्तम्। नाप्युपासना भक्तिः। तस्या आशाप्राप्त-सविषयकज्ञानरूपमनोवृत्तित्वात्। मोक्षसाधनतया विहितवेदनरूपा ध्रुवा स्मृतिरुपासनेति रामानुजाचार्याः। तन्मते ज्ञानानतिरिक्तत्वेन ज्ञानभिन्नत्वसाधनादेवोपासनाभेदस्यापि सिद्धत्वात्। नापि पूजा भक्तिः। तस्याः क्रियात्मकत्वेन दत्तोत्तरत्वात्। भक्तियोगं स लभते एवं यः पूजयेत माम् * इति वाक्ये भेदेन निर्देशाच्च। ननु नवविधभक्तावर्चनस्याप्युक्तत्वात् कथं न पूजाया भक्तित्व-मितिचेन्नैतद्युक्तम्। श्रवणादिनवकमप्यधिकारिभेदेन क्रियमाणं सत् कर्मज्ञानोपासनाभक्तिमार्गीयत्वेनानेकविध भवति। नापि, म-दर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् * राजसं फलसंकल्पं हिंसाप्रायादि तामसमित्येकादशे एकस्य कर्मणोऽधिकारभेदेन नानारूपत्वं तथा। तत्र त्रिवर्गकामिना क्रियमाणः श्रवणादिः कर्ममार्गीय एव। तादृशाधिकारिणः कर्ममार्गीयत्वात्। अकामः सर्व-कामो वा मोक्षकाम उदारधीः * तीव्रेण भक्तियोगेन यजेत पुरुषं परमिति॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेति वाक्याभ्याम्। तुरीयाश्रमे ज्ञानोदयहेतु-चित्तशुद्धिहेतुत्वेन क्रियमाणः स ज्ञानमार्गीयः। यथा यथाऽऽत्मा परि-मृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः * तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तमिति वाक्यात्। नन्वत्र तुरीयाश्रम-स्य कथं लाभ इति चेत्। इत्थम्। सन्दर्भारम्भे, भवताऽभिहितः स्वामिन् भक्तियोगोऽनपेक्षितः * निरस्य सर्वतः सङ्गं येन त्व-य्याविशेन्मन इति प्रश्नवाक्ये सर्वसङ्गतिराहित्यस्य तुरीयाश्रमधर्म-

त्वात्तल्लाभ इति । यद्वा सर्वसङ्गतिराहित्यबोधकं तुरीयाश्रमपदं ज्ञेयम् । अत्र कामनाभेदादधिकारिभेदो ज्ञेयः। साक्षान्मोक्षसाधनत्वेन तान्त्रिकदीक्षापूर्वकं विहितत्वेन क्रियमाणः स उपासनामार्गीयः । अत्रेदमाकूतम् । एकादशे, आत्मारामोऽनया वृत्त्येसन्तेनात्मारामधर्मानुक्त्वा तदर्थं सर्वगतस्य मनसः स्वस्मिन्नर्पणं चोक्त्वा तत्रानधिकारे, यद्यनीशो धारयितुमित्यादिना निरपेक्षकर्मणा शुद्धसत्त्वस्य भक्तिमुक्त्वा सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता ॥ स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदमिति स्वपदप्राप्तिमुक्त्वा, ततो भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृतेति प्रश्ने, मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनमित्याद्यष्टभिः पूर्वोक्तोपासनाशेषभक्तिकथने, वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणमित्यनेन वैदिकी तान्त्रिकी दीक्षा गणिता । उपसंहारे च, इष्टापूर्तेन मामेव यो यजेत समाहितः ॥ लभते मयि सद्भक्तिं मत्स्मृतिं साधुसेवयेति भणितम् । तथाच साक्षान्मोक्षसाधकत्वेनेत्यंशः सत्सङ्गलब्धयेत्युपक्रमगतवाक्यतात्पर्यकः । तान्त्रिकी दीक्षेत्ययं, वैदिकी तान्त्रिकी दीक्षेतिवाक्यतात्पर्यस्मारकः।यत्पुनर्विहितत्वेनेत्यंशः स, यो यजेत समाहित इति विध्यनुवादकवाक्योक्तार्थस्मारकः । उपासनामार्गीयत्वनिश्चयस्तु, मां य उपासितेत्युपक्रमे कथनादिति । अयं वैष्णवमार्ग इत्युच्यते । मुक्तिदविष्णुधर्मेष्वेव निष्ठावत्त्वात् । अर्चायामेव हरये पूजां यः श्रद्धयेहते ॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत इत्यादिवाक्यानामयमेव विषयः । अर्चायामेव हरिबुद्ध्यान्यत्र भावाभावेन ज्ञानित्वाभावात्। तथा, न तद्भक्तेषु इत्यनेन भक्तभावाभावोक्त्याऽर्चाहर्योर्भेदोक्त्या च भक्तिमार्गीयत्वाभावात् । भक्तपदेन कर्ममार्गीयत्वाभावात् । श्रद्धापदेन विष्णुधर्मनिष्ठत्वबोधनात् । प्राकृतपदेन ज्ञानिभक्ताद्यपेक्ष-

य। हीनत्वबोधनाच्च । भक्तिमार्गीयभक्तकृतभक्तिसांप्रदायिकदीक्षापूर्वकं मोक्षसाधनत्वेन क्रियमाणः श्रवणादिर्लोकप्रवाहवन्मुक्तिफलकत्वेनाभिमतत्वात् प्रावाहिकी भक्तिरित्युच्यते ॥

इदमत्र मूलम् । न युज्यमानया भक्त्या भगवत्यखिलात्मनि * सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धय इत्युपक्रम्य, सतां लक्षणमुक्त्वा, त एव साधवः साध्वि सर्वसङ्गविवर्जिताः * सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वऽपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीति कपिलदेवेनोक्तम् । अत्र सतां लक्षणस्य भक्त्यर्थमुक्तत्वेन भक्तिमार्गीयभक्तकृतदीक्षापूर्वकत्वं लभ्यते । अपवर्गवर्त्मनीतिपदेन मोक्षसाधनत्वं चेति । यद्यप्यत्र योगाङ्गत्वेन भक्तिरुक्ता तथापि भक्तिमन्तरेण योगस्याप्रयोजकत्वस्य तृतीयनिबन्धे, अतो दोषनिवृत्त्यर्थं योगः प्रथममुच्यते * निर्दुष्टमेव रमते समता लिङ्गमस्य हि ॥ शुष्कयोगे नैव शक्यं स्वनिर्वाहोऽपि दुर्लभः । अतो भक्तिर्भगवति विना सद्भिर्न सा क्वचित् ॥ सन्तश्च लक्षणैरेव सङ्गश्च हरिवाचकः ॥ अतो विलोमविधिना साक्षात्कारः फलिष्यतीति कारिकाव्याख्याने उपपादितत्वेन भक्तेरेव मुख्यकारणतेति हृदयम् । अत एवाग्रे भक्त्यैव सर्वं भवतीति ज्ञात्वा भक्तियोगौ पृष्टवती देवहूतिः, काचित् त्वय्युचिता भक्तिरित्यादिना । तदुक्तं तत्रैव । भक्त्यैव हि सतां सर्वमित्यर्थादुक्तमित्यत्रैव * अतो भक्तिं च योगं च द्वयं पृच्छति सा पुनरिति ॥कारिकार्थस्तु तत्त्वदीपप्रकाशावरणभङ्गाभ्यां ज्ञेयः । अधिकारिभेदेन दीक्षाभेदात् । सा च पूर्वत्र तान्त्रिकी । अत्र पुनर्नारायणाष्टाक्षरादीनां वैदिकी दीक्षेति। प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणः श्रवणादिर्भक्तिमार्गे मर्यादाभक्तिरि-

त्युच्यते । एकादशे, श्रद्धाऽमृतकथायां मे इत्युपक्रम्य, निरन्तर-कीर्तनं, पूजायां निष्ठा, स्तुतिभिः स्तवनं, परिचर्यादरः, साष्टाङ्ग-प्रणामः, भक्तेष्वाधिकपूजा, सर्वभूतेषु भगवद्भावः, भगवदर्थं लौकिकी क्रिया, लौकिकगाथया भगवद्गुणकथनं, भगवति मनोऽर्पणं, सर्वकामत्यागः, भगवद्भजनार्थं तद्विरोधिनामर्थभोगसुखानां त्यागः, इष्टदत्तहुततप्तानां वैदिकानां व्रततपआदीनां स्मार्त्तानां च भगवदर्थत्वमित्येवं धर्मानुक्त्वा, एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् * मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ भक्त्या संजातया भक्त्येत्यादिवाक्येभ्यः । उत्कर्षश्चास्य प्रकारस्य उपक्रमे, पुनश्च कथयिष्यामीति परकारणत्वप्रतिज्ञानात् । परत्वं च फलाविसंवादित्वम् । समाप्तौ च, मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत इति फलकथनाच्च ॥

भक्तिहंसविवृतौ विशेष उक्तः । तथाहि । अत्र वैदिकी-तान्त्रिकीदीक्षयोरनुक्तत्वात्, पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमिति कथनाच्च । भगवानेवोपदेशक इति ज्ञायते । एवञ्च, एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनामित्यत्रोत्तरार्द्धगतं मयीति पदं सम्बद्ध्यते। तेन कृष्ण एव साम्प्रदायिकरीतिकात्मनिवेदनं सिद्ध्यति । गारुडे तु, सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् * अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं हरेरिति कण्ठत एवोक्तम् । गीतायां च सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेत्युक्तम् । एवञ्चात्मनिवेदनपञ्चाक्षरोपदेशपूर्वकं प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणः श्रवणादिर्मर्यादाभक्तिरिति सिद्ध्यतीति। अस्मिन् प्रकारे कामनाभेदादधिकारिभेदः । स्नेहोत्पत्त्यनन्तरं स्वव्यसनतः स्वतन्त्रपुरुषार्थत्वेन क्रियमाण उत्तमः पुष्टिभक्तिरूपः । मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् * नेच्छन्ति सेवया पूर्णाः कुतो-

ऽन्यत् कालविप्लुतमित्यादिवाक्यात् । सेनापदार्थोऽग्रे वाच्यः । अत्र कामनाभावादिनाऽधिकारिभेदः। एवञ्च भक्तिशास्त्रोक्तेष्वपि श्रवणादिषु क्वचिद्भक्तित्वं क्वचिन्नेति प्रकरणापेक्षया अधिकारस्यैव प्रबलत्वेन नवावधभक्तौ गणितस्याप्यर्चनस्य भाक्तत्वमानियतमिति । वस्तुतस्तु श्रवणादिनवके भक्तिपदप्रयोगस्य भाक्तत्वस्य व्यवस्थापयिष्यमाणत्वान्न किञ्चिदेतत् ।इदं यथा तथा प्रतिपादितं भक्तिहंसे श्रीमत्प्रभुचरणैरिति विशेषतस्ततोऽवसेयम् ॥

नापीच्छा भाक्तः । साधारणेच्छाया तथात्वस्य बाधात् तस्यां विशेषो वक्तव्यः । स चेच्छायां विषयालाभान्निवर्त्तत्वमितिगुप्ताचार्याः । भक्तिचिन्तामणिकारस्तु, 'योगे वियोगवृत्तिः प्रेमेति । संयोगपदार्थस्य वियोगेऽप्यवस्थितिः प्रेमेति सूत्रार्थः । उदाहरणं तु, अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता*नादृष्टेन न दृष्टेन भवता लभ्यते सुखमिति सूत्रार्थत्वेन प्रागुक्तामिच्छामाह। शाण्डिल्यहरिदासोऽपि गुप्ताचार्यमतानुयायी । गोविन्दचक्रवर्त्तिनस्तु— गाढव्यसनसाहस्रसम्पातेऽपि निरन्तरम् * न हीयते यदीहेति साधु तत्प्रेमलक्षणमिति वदन्तः किञ्चिद्विशेषमाहुः । वस्तुमात्रविषयिणी वचनानर्हा समीहा प्रेमेति परमानन्दठक्कुराः प्रेमलक्षणचन्द्रिकायामाहुः । प्रेमरसायनकृद्विश्वनाथोऽपि, अलगन्त्यविचारेण प्रेमेच्छेति स्थितं मतमित्याह । गुणाकरस्तु, योगे वियोगवृत्तिः प्रेमेति सूत्रं, यथा योगे वियोगवृत्तिः प्रेम तथा वियोगे योगवृत्तिरपि प्रेमेत्युपलक्षणविधया व्याख्याय प्रेम्णो भोगपर्यवसायित्वमङ्गीचक्रे । वियोगे योगवृत्तेः, उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः*नीयन्ते पथिकैः कथं कथमपि ध्यानाऽवधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासरा इति श्रीमज्जयदेवकविवरवाक्यमुदाजहार । तदेतत्

सर्वमप्यमञ्जुलम्। इच्छाया अपुरुषार्थत्वेन भक्तेरप्यपुरुषार्थत्वापत्तेः। तथाच, मत्सेवया प्रतीतं चेति वाक्यं विरुद्धं स्यात्। पुत्रादिविषयकस्नेहे इच्छारूपत्वस्यानुभवविरुद्धत्वाच्च। इच्छामीत्यत्र स्निह्यामीत्यनुव्यवसायापत्तेश्च। इच्छाया असिद्धमात्रविषयत्वमिति नियमभङ्गापत्तेश्च। तस्य सिद्धासिद्धविषयत्वात्। यत्तु इच्छारूपस्य प्रेम्णः पुरुषार्थत्वमुक्तं तदपि फलप्रकरणे दूष्यम्। तस्मान्नेच्छाविशेषो भक्तिः। यत्तु तृतीयस्कन्धसुबोधिन्यां, राद्धान्तान्तरे, स्नेह इच्छा परमत्र प्रेमा। तत आसक्तिस्ततो व्यसनमिति निरूपणं तच्छाण्डिल्यभाष्यानुरोधीति शुभम्। यदपि गुणाकर आह, तदपि न मञ्जुलम्। शुकादौ भक्तेर्भोगपर्यवसानादर्शनादिति। नापि द्रवो भक्तिर्भरतोक्तः। द्रवहेतुरयं प्रेमा, न पुनर्द्रवतां गत इति। निर्विषयत्वाच्च। यदपि, यमुपाधिं समाश्रित्य रस आद्यो निगद्यते * तमुपाधिं बुधोत्तंसाः प्रेमेति परिचक्षत इति चिरन्तनमतं, तदपि न पेशलम्। ईश्वरविषयिणी हि सा। अन्यथा, सा परानुरक्तिरीश्वर इति सूत्रविरोधात्। परा निरुपधिरित्यर्थात्। शृङ्गाराङ्गत्वापत्तेश्च॥

ननु तर्हि को नामभक्तिपदार्थ इति चेद् अत्र ब्रूमः। भक्तिशब्दस्य प्रत्ययार्थः प्रेम, धात्वर्थः सेवेति तत्त्वदीपप्रकाशे। तदेवं प्रतिपादितमावरणभङ्गे श्रीपुरुषोत्तमैः। प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययार्थः प्राधान्येनेति नियमादत्र धातुसामान्यार्थे शक्तौऽपि क्तिन्प्रत्ययो भजिसमभिव्याहारात् प्राधान्येन भजिक्रिया भक्तिः। सा च सेवात्मिका। सेवापदं च सातत्याभीक्ष्ण्यान्यतरपूर्वककायिकव्यापारविशेषे रूढम्। स्त्रीसेवा औषधसेवा इत्यादिप्रयोगदर्शनात्। तादृशव्यापारविशेषः परिचर्यारूप एव। स्वतन्त्रसेवाबोधकैः, मत्सेवया प्रतीतं चेत्यादिवाक्यैरवगम्यते। तेषु

सेवया पूर्णत्वकथनात् प्रेमपूर्वकत्वमपि लभ्यते । अन्यथा तस्याः क्लेशजनकत्वेन स्वतः पुरुषार्थत्वोक्तिभङ्गप्रसङ्गात्।एवञ्च प्रेम्ण एव पूर्णत्वप्रयोजकत्वेन तस्य प्राधान्यं गम्यते । भक्तिलक्षणवाक्यैर्भक्त्येति वाक्याच्च । अतः स एव प्रत्ययार्थः । कायिकरूपा त्वप्रधानत्वात् प्रकृत्यर्थः । साऽपि मत्पादसेवाभिरता मदीहा इति सेवनमुपक्रम्य, पश्यन्ति ते म इति वाक्येनावगम्यते। अतो, भक्त्या मामित्यादावुभयं संगृह्य ततः प्रेमसेवाऽत्र तथोच्यते इत्यर्थ इति। एवञ्च भक्तिपदे योगरूढभावः। यद्यपि, इदं तु तत्त्वं भक्तिहंसविवृतौ अथवेत्यस्य तथापि, भक्त्या ग्राह्य इति वक्ष्यमाणवाक्ये युगपद्वृत्तिद्वयविरोधं इत्यस्वरसेन पक्षान्तरमाहुरित्याभासे पूर्वमनूदितनिबन्धोक्तपक्षेऽस्वरस उक्तः । स च तेषामभिप्रायाऽज्ञानेऽसङ्गत इव भाति । सेवाप्रेम्णोः प्रकृतिप्रत्ययार्थत्वात् । न हि पचति पाचकः दाक्षीभवन्नित्यादिशब्देषु युगपद् वृत्तिद्वयविरोधः क्वापि सिद्धः । येन तन्निबन्धनोऽस्वरसः स्यादिति। तत्रेयं शङ्का। प्रकृत्यर्थ उभयं किन्तु प्रत्ययः साधुत्वार्थक इत्यपि पक्षः श्रीपुरुषोत्तमानामभिप्रेतो न स्यात्तदा दोष आपद्येत, परं तु सोऽपि पक्षोऽभिप्रेत एव । अन्यथा तत्रेममेव पक्षमनूद्य, इदमत्र अन्यायश्चानेकशब्दत्वमिति न्यायानुरोधेनोक्तमिति न्यायानुरोधोक्तिर्व्यर्था स्यात् । अस्मिन् पक्षे प्रत्ययपदं लक्षणया प्रकृतिवाचकं ज्ञेयम् । सेवापेक्षया प्रेम्णः प्राधान्यमिति ज्ञापनाय प्रत्ययपदप्रयोग इत्यपि । अथवा, प्रत्ययार्थः प्रेम, धात्वर्थः सेवेति निबन्ध एवं योजनीयः। धातोरर्थः सेवा । भज सेवायामिति धातुपाठात् । भज इत्येष वै धातुः सेवायां परिकीर्तित इति वाक्याच्च । प्रतीयत इति प्रत्ययः स चासावर्थश्च प्रत्ययार्थः।तथाच स्नेहोऽपि, अथातो भक्तिमीमांसेति प्रतिज्ञाय, सा पराऽनुरक्तिरीश्वर इति शाण्डिल्यसूत्रात्

प्रतीयमानो धात्वर्थः । माहात्म्यज्ञानपूर्वस्तु सुदृढःसर्वतोऽधिकः * स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथेति पञ्चरात्राच्च । यद्वा भक्तिपदस्योक्तसूत्रादिभिः प्रतीयते योऽर्थः स्नेहरूपः स रूढार्थः। अवयवशक्तिविचारे धात्वर्थः सेवेति यौगिकार्थः सेवा । एवञ्चोभयथाऽप्युभयं धात्वर्थः । क्तिन्प्रत्ययः साधुत्वार्थक इति श्रीमदाचार्याभिप्रायः स्फुरति ।अन्यथा प्रकृत्यर्थः सेवा, प्रत्ययार्थः प्रेमेत्येव ब्रूयुः।ननु तथापि भक्तिपदात् कथमुभयबोधो, युगपद्वृत्तिद्वयविरोधादितिचेन्न । गङ्गायां घोषमत्स्यौ इत्यत्रेव प्रकृतेऽपि अबाधात्। वस्तुतस्तु लाघवेन सर्वत्र हर्यादिपदवच्छक्तिस्वीकारान्न किञ्चिदेतत् । नचैवं लक्षणत्वव्यवहारापलापप्रसङ्ग इति वाच्यम्। अप्रसिद्धशक्तिनिबन्धनत्वात् तस्य । किञ्च,पुष्पवच्छब्दवदुपपत्तेः। यथा एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकराविति वाक्यात् सकृदुच्चरितेन पुष्पवच्छब्देन युगपद्दिवाकरनिशाकरयोर्बोधस्तथा प्रकृतेऽपि । ननु किमत्र शक्यतावच्छेदकम् । न तावत् प्रेमत्वम् । सेवाया अबोधापत्तेः । नापि सेवात्वम् । प्रेम्णः अबोधापत्तेः । नापि प्रेमसेवासमुदायत्वत्वं तत् । शक्यतावच्छेदकगौरवादितिचेत् । मैवम् । प्रेमत्वं सेवात्वं चेत्युभयं शक्यतावच्छेदकं, पुष्पवच्छब्दस्य रवित्वचन्द्रत्वे इव । नच विकसनार्थकपुष्पधातोर्मतुबन्तस्य रूपमिति विकासवत्त्वं प्रकाशवत्त्वं वा शक्यतावच्छेदकमिति न तद्भेद इति दृष्टान्तवैषम्यमिति शङ्क्यम् । तस्य वह्न्यादावपि तुल्यत्वेन रविचन्द्रवाचकत्वनियमभङ्गप्रसङ्गात् । अतः कुसुमद्वयं कमलकुमुदरूपमङ्गीकरणीयम् । पद्मिनीपतिः सूर्यः कुमुद्वांश्चन्द्र इत्यादिप्रयोगात् । अन्यथा दिवा रात्रौ च विकासिनामनेकेषां पुष्पाणां सत्वात् तत्रापि प्रयोगः स्यात् । अत एव कश्चित्, कुसुमं कोपीतक्या विकसति रात्रौ दिवा च कूष्माण्ड्याः * य-

द्यपि तथापि तस्मादुत्कर्षः कमलकुमुदयोरेवेत्याह। अतो लोक-प्रसिद्ध्या पुष्पवच्छब्दरूढिरेवादरणीया। एवञ्च सिद्ध एव शक्यतावच्छेदकभेदः। नचैकयोक्त्येत्यस्य साधारणवचनेनेत्यर्थाद् रविचन्द्रसमूहत्वस्यैव शक्यतावच्छेदकत्वे प्राप्ते वनादिपदवदेकवचने च प्राप्ते तन्निवृत्त्यर्थमत्र द्विवचनविधिरिति न द्वयोस्तथात्वमिति पुनर्दृष्टान्तवैषम्यमिति वाच्यम्। साधारणवचनेन पुष्पवत्पदं रविचन्द्रसमूहवाचकं, तच्च द्विवचनान्तं प्रयोक्तव्यमिति वाक्यभेदप्रसङ्गात्। कल्पनागौरवात्। दिवाकरनिशाकरावित्युद्देश्यगतसंख्याया अविवक्षितत्वकल्पनापत्तेश्च। नच पुष्पवन्ताविति द्विवचनबलादेवोभयप्रतीतिरिति शङ्क्यम्। एकयोक्त्येति विशेषणवैयर्थ्यापत्तेः। रामावित्यादाविवैकशेषेणैवोभयप्रतीतिसम्भवात्। ननु, दाराः पुंभूम्नीति वदिदमेकवचननिवृत्त्यर्थमितिचेन्न। एवं सति पुष्पवच्छब्दादेवोभयप्रतीतिसिद्ध्येष्टापत्तेः। नच पुष्पवत्त्वमेव शक्यतावच्छेदकमुभयसाधारणमस्त्विति वाच्यम्। मतुबन्ताद्विहितो भावप्रत्ययः प्रकृत्यर्थं गमयतीति न्यायेन पुष्पमेवेति पर्यालोचनया तस्योभयसाधारण्याभावात्। नच पुष्पत्वेनैतस्य शक्यतावच्छेदकत्वे बाधकाभाव इति शङ्क्यम्। तत्प्रकारकबोधापत्त्या रवित्वचन्द्रत्वप्रकारबोधानुपपत्तेः। नचेष्टापत्तिः। रवित्वचन्द्रत्वप्रकारकबोधस्य सर्वानुभवसाक्षिकत्वात्। एतेन तदुभयत्वं तदन्यतरत्वं वा तथेति परास्तम्। एवञ्च प्रेमपूर्वककायिकव्यापारत्वं भक्तित्वम्। लौकिकक्रियावारणाय प्रेमपूर्वकेति। मानसव्यापारवारणाय कायिकेति। एवमपि पुत्रादिषु प्रेमपूर्वककायिकव्यापारेऽतिव्याप्तिर्विभाव्यते यदि तदा श्रीकृष्णविषयकप्रेमपूर्वककायिकव्यापारत्वमेव भक्तित्वम्। न चैवं गुरुभक्तावव्याप्तिः शङ्कनीया। यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ *तस्यैते कथिता ह्यर्थाः

प्रकाशन्ते महात्मन इति श्रुतेः, आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ॥ न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुरिति स्मृतेश्च गुरुभगवतोरभेदात् । एवमेव विष्ण्वादिभक्तौ लक्षणसङ्गतिरूहनीया । अथ च श्रीकृष्णस्नेहत्वमेव भक्तित्वम् । भक्तिरस्य भजनं, तदिहामुत्र फलभोगनैराश्येनाऽमुष्मिन् मनःकल्पनमिति श्रुतेः । सा परानुरक्तिरीश्वरे इति शाण्डिल्यसूत्रात् । माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ॥ स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथेति पञ्चरात्राच्च । अत्र विषयान्तरव्यावृत्त्यर्थं श्रीकृष्णेति । गुरुभक्त्यादावव्याप्तिवारणं पूर्ववत् । कृष्णत्वं तु परब्रह्मत्वम् । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति श्रुतेः । तल्लक्षणं तु— निरङ्कुशजगज्जन्मादिकर्तृत्वेन शास्त्रप्रतिपाद्यत्वम् । जन्माद्यस्य यतः शास्त्रयोनित्वादिति तत्त्वसूत्रात् । मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ॥ मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः । अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे इत्यादिस्मृतिभिरक्षरेऽपि तथात्वादतिव्याप्तिः । तद्वारणायात्मेति विशेष्यम् । अव्यक्तादिशब्दानामक्षरवाचकत्वमुपरिष्टात् स्पष्टीकरिष्यते । गीतायां तु, उत्तमः पुरुषस्त्वन्य इति अक्षरपरत्वमुक्त्वा, यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततमिति पुरुषोत्तमत्वमुक्तम् । तत्राप्यक्षरादावतिव्याप्तिवारणायाऽक्षरादिभिन्नत्वं निवेशनीयम् । अथवा सच्चिदानन्दत्वमेव लक्षणम् । नचाक्षरेऽतिव्याप्तिः । तस्य चित्प्रधानत्वात् । अथवा पूर्णानन्दत्वं कृष्णत्वम् । पूर्णत्वमपरिच्छिन्नत्वम् । तच्च स्वरूपतो बोध्यं, न तु परिमाणतः । तेन नाक्षरेऽतिव्याप्तिः । नापि सच्चिदानन्दसमूहात्मके जगति । सैषानन्दस्य मीमांसेत्युपक्रम्य तैत्तिरीये, ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति संख्यापरिच्छेद-

श्रवणात् । तथा बृहदारण्यके, ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्द इति तादृशानन्दिनो लोकत्वेन विशेषितत्वाच्च । ततः परस्य तु, यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह * आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन इति अपरिच्छिन्नानन्दत्वश्रावणात् । आनन्दो ब्रह्मेति व्यजानादिति श्रुत्यन्तराच्च। सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मण इतिश्रुतिषु पूर्णानन्दत्वमूहनीयम् । अत एव, न भेदस्ते कुत्राप्यतिरुचिर किन्तु प्रियतमाविभेदोऽतः स्वामिन् कृपय मयि दासेऽतिविधुरे * विभेदः केन स्यात् स्वकृतनिजपुष्टेरितरथा प्रवाहादेः स्वीयप्रणतचरणप्रापक विभो इति आनन्दकृतभेदाश्रवणं युज्यते । तदुक्तमाचार्यैः, गणितानन्दकं बृहत् पूर्णानन्दो हरिरिति ॥

प्रकृतमनुसरामः ॥ नच श्रुतौ मनःकल्पनस्य मनोव्यापाररूपत्वेन न स्नेहो भक्तिरिति वाच्यम् । तस्य स्नेहजत्वात्, स्नेहावस्थाविशेषत्वाद्वाऽदोषात् । मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये * मनोगतिराविच्छिन्ना यथा गङ्गाऽम्भसोऽम्बुधौ ॥ लक्षणं भक्तियोगस्य निर्गुणस्य उदाहृतम् । अहैतुक्यऽव्यवहिता या भक्तिः पुरुषोत्तमे ॥ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥ स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत इति वाक्ये अत एव, ता नाविदन् मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् * यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे इत्यत्र व्रजरत्नानां तथाभावो निरूपितः । पुत्रादिस्नेहे तदेकतानत्वस्याननुभवाच्च । तथा सूत्रे परपदं निरुपाधिकत्वबोधकम् । वाक्ये सुहृत्पदं ब्रह्मधर्मत्वबोधकम् । सर्वतोऽधिकपदं निरुपाधिकत्वबोधकम् । अहैतुक्यव्यवहितेति वाक्यात् । नच पञ्चरात्रस्याप्रामाण्यं

शास्त्रम् । नारायणीयमोक्षधर्मे तत्प्रामाण्यस्योक्तत्वाद्भारते । तर्कचरणेऽपि विरुद्धांशत्यागेन शेषाभ्यनुज्ञानात् । जैमिनीयस्मृतिपादे तथैव स्मृतीनां प्रामाण्यसाधनात् । नचेदमाचार्यानभिप्रेतमिति भ्रमितव्यम् । चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजेति श्रीमदाचार्योक्तेः । अयमर्थः । प्रवणपदं हि क्रमनिम्नोर्वीप्रह्वचतुष्पथक्षणायत्तेषु रूढम् । प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे इति कोशात् । प्रवणस्तु क्षणं प्रह्व क्रमनिम्ने चतुष्पथे* आयत्ते चेत्यनेकार्थाच्च । मनश्च पार्थिवम् । अन्नमय हि सौम्य मन इति श्रुतेः । इन्द्रियत्वस्याग्रे निराकरिष्यमाणत्वाच्च । तत्स्वरूपलक्षणं तु सङ्कल्पविकल्पात्मकत्वम् । कामजनकत्वं कार्यलक्षणम् । यत्सङ्कल्पविकल्पाभ्यां वर्त्तते कामसम्भव इति वाक्यात् । तन्नित्यमिति केचित् । तन्न । तन्मनोऽसृजतेति श्रुतेः । केचित्तु सकलशरीरव्यापिमानोरथिकाभिमानिकसुखदर्शनाद् व्यापकमाहुः । तन्न रुचिरम् । तथा प्राणा इत्यधिकरणे जीवातिदेशेनाणुत्वात् । नच सकलशरीरव्यापिसुखानुपलब्धिप्रसङ्ग इति वाच्यम् । तस्य चन्द्रदेवताकत्वेन नानाकिरणशालित्वाभ्युपगमात् । जीववत् । व्यतिरेको गन्धवदिति तत्त्वसूत्रात् । एवञ्च सति तस्मिन् कृष्णे पूर्वं प्रह्वमीषन्नम्रं तत आयत्तं तदधीनं, ततः क्रमेण भगवदेकतानम् । ता नाविदन्मय्यनुषङ्गबद्धधिय इत्यादिवाक्योक्तप्रकारां गम्भीरतां प्राप्तं यच्चेतस्तदेव सेवारूपम् । समाधाविव भगवति लयं प्राप्तमिति यावत् । न तु वृत्त्यन्तरविशिष्टमिति । अस्यार्थस्याचार्याशयगोचरत्वम् । ततः प्रेम तथासक्तिर्व्यसनं च यदा भवेदिति, यदा स्याद् व्यसनं कृष्णे कृतार्थः स्यात्तदैव हीति च भक्तिवर्द्धिनीवाक्यात् । एवमेव भक्तिः सर्वात्मभावपदेनोच्यते । तथाहि । भ्रमरगीतीय—सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे * विरहेण महा-

भागा महान् मेऽनुग्रहः कृत इति वाक्यस्य, सर्वोऽप्यात्मनो भावो भगवत्सेवाधिकृतः उत्तरोत्तरं वृद्ध्यर्थम् आरब्ध इत्येति सुबोधिन्या व्याख्यानाद्, भक्तिरूप एव। अन्यथा, भगवन्युत्तमश्लोके भवतीभिरनुत्तमा * भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभेति वाक्यं विरोद्ध्येत । तत्र सर्वपदं सर्वेन्द्रियेषु लाक्षणिकम् । आत्मपदमन्तःकरणवाचकम्। भावपदं भगवत्परत्ववाचकम्।भवनं भावः। भगवत्परत्वेनावस्थानमिति यावत् । तथाच सर्वेन्द्रियाणाम् अन्तःकरणस्य च भगवत्परत्वं सर्वात्मभाव इति फलति। यद्वा, सर्वः साक्षात्परम्परासम्बन्धेनैकादशमनोवृत्तिरूपो वृत्तिवृत्तिरूपो भाव इति न वाक्यशेषग्राहितशक्तिविरोधः। नन्विन्द्रियत्वेनैवान्तःकरणप्राप्तेः पृथग्ग्रहणमपार्थमिति चेन्न । मनस इन्द्रियत्वाभावात् । मनः सर्वेन्द्रियाणि चेत्यादिश्रुतौ भेदेनोल्लेखात् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन इति वाक्याच्च । ननु कथं तर्हि, मनःषष्ठानीन्द्रियाणि, इन्द्रियाणां मनश्चाऽस्मि, इन्द्रियाणि दशैकं चेत्यादिवाक्योपपत्तिः। उच्यते।प्रथमस्योपपत्तिर्यजमानपञ्चमा इडां भक्षयन्तीत्यत्रानृत्विक्त्वेऽपि यजमानस्य पञ्चत्वसंख्यापूरकत्ववन्मनसः षट्त्वसंख्यापूरकत्वात् । तथा द्वितीयस्योपपत्तिः, नक्षत्राणामहं शशीति नक्षत्रनियामकत्वविभूतिकथनमात्रपरत्वादिन्द्रियनियामकत्वेन प्रयोगाङ्गीकारेण तज्जातीयतागमकत्वाभावात् । अन्यथा ज्ञानवतामहमिति वाक्याज्ज्ञानेऽपि ज्ञानवत्ताऽऽपादनप्रसङ्गात् । एवमेव तृतीयस्योपपत्तिर्बोध्या । इन्द्रियत्वव्यवहारस्तु तन्नियामकत्वनिबन्धन इति दिक् ॥

प्रस्थानरत्नाकरस्य प्रत्यक्षखण्डे तु मनस इन्द्रियत्वमनिन्द्रियत्वं चेत्युभयमप्युक्तम् । अयं च भावश्चतुर्थपादे, प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेरित्यत्र सिद्धः । तथाहि ।

पूर्वसूत्रे छान्दोग्ये, भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इत्युक्त्वा भूम्नो लक्षणमुक्तम् । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति । अत्र नान्यद्विजानातीत्येतावतैव चारितार्थ्येऽपि यदिन्द्रियव्यापारो निषिद्धस्तत्राप्यन्यविषयकः स सिद्धो भवतीति जगद्व्यापारराहित्यं सिद्धमिति स्थितम् । तत्र प्रकरणं ब्रह्मविदाप्नोति परमित्युपक्रमेणैवमुक्तेः । असन्निहितत्वं तु लीलायाः कालमायाद्यतीतत्वेन प्रकृतं, तद्दूरमित्यपि तत्र पठितम् । तत्प्रकरण एवाग्रे छान्दोग्ये पठ्यते। सर्वं ह पश्यः पश्यतीति सर्वविषयकदर्शनमुच्यते इत्यन्यविषयकदर्शनादि नोपपद्यत इति प्रत्यक्षोपदेशादितिचेदित्यंशेनाशङ्क्य समाधत्ते, आधिकारिकमण्डलस्थोक्तेरिति । न श्रुतौ सर्वपदेन जगदुच्यते, किन्तु यस्यां यस्यां लीलायां देशकालभेदेन क्रियमाणायामधिकृतो य एको भक्तस्तस्यैव तावन्ति रूपाणि सन्ति तान्याधिकारिकाणीत्युच्यन्ते । तेषां मण्डलं समूहस्तत्र स्थितस्तन्मात्रमुच्यत इति नानुपपन्नं किञ्चित् । अत एवाग्रे पठ्यते । सर्वमाप्नोति सर्वश इति । स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः । शतं च दश चैकश्च सहस्राणि च विंशतिरिति । विस्तरस्तु फलनिरूपणे वक्ष्यते । सा सा सा सा जगति सकले इत्येवमन्यत्र जायमानोऽप्ययं भावो न सर्वात्मभावपदाभिधेयतां धत्ते । योगरूढेः पङ्कजादिवत् । नचात्र ज्ञाने पर्यवसानात् परमतप्रवेशः । स्नेहोत्तरभावित्वेनादोषात् । वस्तुतस्तु फलात्मकज्ञानमेव सर्वात्मभावः । इममेवार्थं, ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतयोऽप्याहुः । अत एव भाष्ये, अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तमिति सूत्रविचारे ज्ञानरूपत्वमुच्यते । भगवदात्मकत्वात् सर्वात्मभावस्येत्यनेन । प्रदानवदेव तदुक्तमिति सूत्रस्य भाष्यप्रकाशे च विगाढ-

भावेन सर्वत्र तथानुभवरूपं यत् कार्यं तादृशः प्रियत्वानुभव इति सर्वात्मभावो लक्षितः। सा सा सा सा जगतीति दृष्टान्तोऽप्येवमेव सङ्गच्छते ॥

स्यादेतत् प्रतिज्ञाहानिः, परमतप्रवेशो, मध्ये भक्तिप्रवेशे तत्प्रयुक्तं गौरवं चाधिक इ। सर्वात्मभावोऽधिकृत इति प्रक्रम्य, भक्तिः प्रवर्तितेति श्लोकवि ।धः। वशे कुर्वन्ति मां भक्त्येति प्रमाणविरोधः। भाष्यप्रकाशस्य ्राधिकरणे सर्वात्मभावरूपाया मुख्यभक्तेरित्यादिलिङ्गभूयस्त्वाधिकरणावतरणस्य विरोध इतिचेन्नैवम्। परमासक्तिः सर्वात्मभाव इत्येव पक्षः साधीयानिति। ननु तथापि तत्र प्रवेशेऽतिरिक्तदोषास्तु स्युरितिचेन्न। श्रुतिस्मृतिसूत्रेषु नित्यज्ञानत्वकथनात्। तथाच भाष्यं, यत्र नान्यत् पश्य।त नान्यच्छृणोति नान्यद्विजानाति स भूमेति। एतेन सर्वात्मभावस्वरूपमेवोक्तं भवति। तत्र विरहभावेऽतिगाढभावे सर्वत्र तदेव स्फुरतीति। परमासक्त्यैतथानुभवस्य पुत्रादौ सिद्धत्वादित्युक्तम्। एवमेव सर्वाविरोध इति। एव भाष्यप्रकाशे प्रियत्वानुभव इत्यस्य प्रियत्वरूपो भाव इत्यर्थः। अनुभवपदस्य भक्तिलक्षणत्वात्। मामेकमेव शरणमात्मानं सर्वदेहिनाम् * याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयमिति वाक्यं तु सर्वात्मभावेन मां याहीति योजनीयम्। अयं च पुष्टिमार्गीयः सर्वात्मभावः। मर्यादामार्गीयस्तु, सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास हेति नवमोक्तम् अम्बरीषीये। ये तु भ्रमरगीतीय—सर्वात्मभावोऽधिकृत इत्युद्धवोक्तौ, न स मुख्यः सर्वात्मभावः, किन्तु भिन्न एव। सर्वोऽप्यात्मनोऽन्तःकरणस्य भावो भवतीनां मम ज्ञानविषयोऽभूदित्यर्थात्। यद्यप्येता मुख्यसर्वात्मभाववत्यस्तथाप्युद्धवैः स न ज्ञातः, किन्तु तदुक्तस्य शृङ्गारस्य सम्बन्धिभावमात्रं बुद्धम्। मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः

कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः * इत्यादिवाग्विलासैः घोषभूषणसीमन्तिनीभिस्तद्तिरिक्तस्यैव स्फुटीकरणादित्युक्तं कैश्चित्। तन्न मञ्जुलम्। उद्धवस्य सर्वात्मभावाज्ञाने, भगवत्युत्तमश्लोके भवतीभिरनुत्तमा * भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभेति न वदेत्। नोद्धवोऽण्वपि मन्न्यून इति वाक्यादपि नोद्धवेऽज्ञानं युक्तम्। मधुप कितवबन्धो इत्यादिः कामभावेन वाग्विलासस्तु भगवद्धारणार्थकः। भूषणधारणार्थं लीलाधारणवदिति वक्ष्यते। अत एव, अत एवोद्धवैरुक्तं दौत्येन व्रजमागतैः * सर्वात्मभावोऽधिकृतो विरहेणेति तद्वच इति श्रीमद्धरिधनचरणा आहुः। तेन न सर्वस्मिन्नात्मभावः सर्वात्मभावः। अयं निष्कृष्टो रसिकचूडामणिश्रीमद्धरिधनचरणैः। अतः सर्वात्मभावो हि त्यागात्माऽपेक्षया युतः * भावस्वरूपफलकः स्वसम्बन्धप्रकाशकः॥ देहादिस्फूर्तिरहितो विषयत्यागपूर्वकः। भावात्मकामसम्बन्धिरमणादिक्रियः सदा॥ स्वतन्त्रभक्तिशब्दाख्यः फलात्मा ज्ञायतां जनैरित्यादिभिः। नन्वेकमेव लक्षणं वाच्यम्, अन्यथा गौरवमितिचेन्न। भक्तेर्बहुविधत्वात्। तथाहि। भक्त्या मामभिजानातीत्यादौ पूर्वोक्तलक्षणा भक्तिः। मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् * नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतमिति वाक्यात्। देवानां गुणलिङ्गानामानुश्रविककर्मणाम् * सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या। अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीत्युपक्रम्य, नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः * येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि॥ पश्यन्ति ते मे रुचिराऽवतंसप्रसन्नवक्त्रारुणलोचनानीति वाक्ये आत्मभावेनेति दर्शनात्। सा च व्रजरत्नस्वरूपासु प्रसिद्धा द्वितीयलक्षणा। ननु नेदं साम्प्रतम्। कामोपाधिकस्नेहवत्त्वाद्भक्तानाम्। गोप्यः कामादि-

त्यादिवाक्यादितिचेन्मैवम् । संसृज्य सर्वविषयॉस्तव पादमूलं प्राप्ता इत्युक्तिविरोधात् । न हि कामिन्य एवं वदन्तीति । किञ्चाऽतितोके पूतनाऽसुपयःपानानन्तरं रक्षाकरणे श्रीशुकेन हेतुरुक्तः— इति प्रणयबद्धाभिर्गोपीभिः कृतरक्षणमिति । न हि कामोपाधिकस्तादृशे स सम्भवति । न वा तादृशीनामञ्जनादित्यागः सम्भवति। प्रत्युत तत्सर्वं प्रसाध्यैव गमनम् । कुब्जावत् । किञ्च, ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिका इत्यादिना भगवता स्तुताः । तथा, एताः परं तनुभृतो वरगोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः ॥ वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः । यासां हरिकथोद्गीतं पुनाति भुवनत्रयमित्यादिभिरुद्धवेन, नोद्धवोऽण्वपि मन्न्यून इत्यादिना भगवत्स्तुतेनापि स्तुता इति न सोपाधिकभक्तिशङ्कापि । किञ्च, बृहद्वामनपुराणे गीयन्ते भृग्वादीन् प्रति ब्रह्मणो वाक्यानि— षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा ॥ नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥ तथापि न मया प्राप्तास्तासां वै पादरेणवः । श्रुत्वैतद् ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥ वैष्णवानां पादरेणुर्गृह्यते त्वद्विधैरपि । सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥ तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत् । गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥ ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा सनातनीम् । कथां सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥ ब्रह्मोवाच ॥ न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचिदिति । अतोऽपि न सगुणत्वम् । किञ्च, गोप्यो गाव

ऋचः अष्टावष्टसहस्रं द्वे शताधिकाः स्त्रियस्तथा ऋत्र उपनिषद्-स्ता वै ब्रह्मरूपा ऋचः स्त्रियः ॥ अन्यथा, भगवत्युत्तमश्लोके भव-तीभिरनुत्तमा * भक्तिः प्रवर्द्धिता दिष्ट्या मुनीनामपि दुर्लभेति न ब्रूयादुद्धवः । ननु कामाद् गोप्य इत्यस्य का गतिरिति चेत् । अन्तर्गृहगतसगुणभक्तपरत्वमित्येवमवधेहि । अत एव, भयान् कंस इत्यादिना गौणसाधनोक्तिः । ननु तथापि निर्गुणभक्तस्तुतौ, क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क चैष परमात्मनि रूढ-भावः * नन्वीश्वरोऽपि भजतो विदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगद-राज इवोपयुक्त इति वाक्ये व्यभिचारदोषकथनात् कथं निर्गुण-भक्तिः, कथं चैता निर्गुणा इति चेन्न । तदर्थानवबोधात् । तथा-हि । ननु पूर्वश्लोकेऽनन्तकथारसस्य किं ब्रह्मजन्मभिरित्युक्तम् । तत्र स्त्रियः कामुक्यः स्वभावत एव पुरुषमात्रे रक्ता भवन्ति, भग-वाँश्च पुरुषोत्तम इति कामभावेन भगवति भक्तानामेतासां कथं ब्रह्म-जन्मादिमद्भ्योऽप्युत्कर्षः सम्भवतीत्याशङ्क्य निराकरोति सर्वाभ्यः स्त्रीभ्यः सर्वेभ्यः पुरुषेभ्यश्चाधिक्योपपादनेन।तथाचायमर्थः।इमाः क, साधारण्यः स्त्रियश्च क्व । अल्पसाधर्म्यमप्यन्योन्यं नास्तीति अस-म्भावनापूर्वकं कथनमिदम् । अन्यैस्तु स्त्रीशब्दप्रयोगादेतासु स्त्री-त्वमपि न निरूपयितुं शक्यमिति। स्त्रीणां कामभावेनैव पुंसु स्नेह-दर्शनात्॥ननु कामलीलाप्येतासु निरूप्यते। सत्यम्। तथापि न तदु-पाधिकः स्नेहः, किन्तु निरुपाधिरेव । उक्तयुक्तीनामन्यथाऽनुपप-त्तेः । रसो वै स इति श्रुत्या रसरूपो भगवान् स्वयं तादृग्रस-दानार्थं तं भावं सम्पाद्य तं रसं ददातीति तत्त्वम् । युक्तं चैतत् । अन्यत्रैवम्भावाभावेनैतास्वप्यदाने रसत्वव्याहतेः । यथा दशरस-वत्त्वं भगवतस्तथा वक्ष्यामि । तथाचैतासु निर्गुणत्वं भगवत इव बोध्यम् । तथाहि । न हि सकलगुणशून्यं ब्रह्म केनापि प्रकारेण

सिद्ध्यति । सत्यं ज्ञानमानन्दं ब्रह्मेति श्रुतेः । नचात्र असत इ-
सान्तव्यावृत्तं ब्रह्म लक्ष्यत इति न दोष इति वाच्यम् । प्रम ।ग-
भावात् । वाक्येन यावद्व्यावर्त्यज्ञानाभावेन तद्व्यावृत्तब्रह्मणो-
ऽपि ज्ञानाभावे वाक्यस्याबोधकतापत्तेश्च । लक्ष्यत्वस्य वाच्यत्व-
व्याप्तत्वेन वाच्यत्वस्यापरिहार्यत्वाच्च । ननु लक्ष्यत्ववाच्यत्वयोर्न
व्याप्तिः । हेतोरुपहितत्वात् । लक्ष्यत्वे सधर्मकत्वस्योपाधित्वादि-
तिचेन्न । तल्लक्षणानाक्रान्तत्वेनोपाधित्वस्याशक्यवचनत्वात् ।
नच शुद्धे ब्रह्मणि लक्ष्यत्वसधर्मकत्वयोरसाहचर्यादस्त्युपाधिलक्ष-
णाक्रान्तत्वमिति वाच्यम् । असाहचर्यस्याभ्युपगमैकशरणत्वेन प्रति-
वाद्यनादरणीयत्वात् । नच वाङ्निवृत्तिश्रुतेरवाच्यत्वे ब्रह्मणः
सिद्धे सधर्मकत्वस्य नोपाधितानिवृत्तिरिति शङ्क्यम् । तस्याः सा-
मस्त्येन वदनासामर्थ्यपरत्वात् । अप्राप्येतिप्रशब्देन तथावसायात् ।
अनाप्येत्युक्त्यापि तन्निवृत्तिसम्भवात् । सर्वथाऽप्राप्तौ तु, यतो
वाच इति यच्छब्दस्यापि ब्रह्माप्राप्त्या तदज्ञाने, कुतो निवर्त्तन्ते
वाच इति ज्ञानानुदयेन वाक्यस्याबोधकताप्रसक्तेः । एतेनैव सधर्म-
कत्वस्यानुमानसम्भवात् । ततः सिद्धे तस्मिन् वाच्यत्वे सत्यज्ञाना-
दिपदानां तात्पर्यानुपपत्त्यभावादत्र लक्षणाया बीजस्याभावेन
अशक्यवचनत्वात् । लक्षणायाः शक्यसम्बन्धरूपत्वेन द्विनिष्ठत्वा-
द्धर्मापत्त्या घट्टकुट्यां प्रभातावाच्याप्तेः सार्वजनीनत्वेन नोक्तहेतो-
रप्रयोजकत्वम् । किञ्च, सत्यज्ञानादिपदलक्ष्यत्वं कुतोऽवगतम् ।
न श्रुतेः । अप्रसिद्धत्वात् । नापि श्रुतार्थापत्तेः । परिहृतत्वात् ।
नाप्यन्यतः । लौकिकानां ब्रह्मधर्मविचारे अप्रमाणत्वात् । अलौ-
किकानामभावाच्च । तस्मान्न लक्षणा प्रमाणपदवीमधिरोहति ।
अथ स्वरूपमेव लक्षणं स्वरूपलक्षणमिति व्युत्पत्त्या सत्यादिकमेव
लक्षणमिति विभाव्यते तदाऽथातो ब्रह्मजिज्ञासेति जन्माद्यस्य यत

इति सूत्रानुरोधेन जगत्कर्तृरूपलक्षणस्यापि स्वरूपलक्षणत्वापत्तिः। धर्मधर्म्यभेदस्योभयत्रापि तौल्यात् । नच यावल्लक्ष्यकालमनवस्थितत्वे सति व्यावर्त्तकत्वरूपतटस्थलक्षणाक्रान्तत्वेन नास्य स्वरूपलक्षणत्वमिति वाच्यम् । यावल्लक्ष्यकालमनवस्थितत्वस्याभ्युपगमैकशरणत्वेन प्रतिवाद्यनादरणीयत्वात् । जगतश्च नित्यत्वेन प्रलयेऽपि सूक्ष्मरूपेणाऽवस्थानात्।नासतो विद्यते भाव इति स्मृतेः। किञ्च गन्धवत्त्वलक्षणं दृष्टान्तीकृत्येदं साध्यते । तत्र तन्न लक्षणम्। अव्याप्तेः । किन्तु यावल्लक्ष्यमवस्थितं गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वरूपं पृथिव्या लक्षणमिति न किञ्चिदेतत् ॥

प्रकृते त्वेवं श्रुत्यर्थः। यतो वाच इति श्रुतिरपि न वाङ्मात्रप्राप्यत्वं निषेधति । किन्तु लौकिकवाक्प्राप्यत्वमेव । मनःसहभावोक्तेः । वेदस्यापौरुषेयत्वेन ईश्वरनिःश्वासरूपत्वेन वा मनःसहभावाभावात् । दूतीरिव त्वं मनसोऽसीतिश्रुत्या लौकिकवाच एव तथात्वकथनात् । अनृतं वै मनसा ध्यायति इत्यादावपि तथादर्शनात्।तथाच प्राकृतिकगुणरहितश्रुत्युक्तगुणगणवद् ब्रह्मेति सिद्धमाकरे । तदुक्तं— न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणावभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिना विवादाऽनवसरे उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय कोऽन्वर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् । यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्यात् ॥ तद् ब्रह्म विश्वभवमेकमनन्तमाद्यमानन्दमात्रमविकारमहं प्रपद्ये इति ॥

प्रकृतमनुसरामः ॥ वैलक्षण्यमेवाह । अवनचरीरिति । जसः स्थाने शस् छान्दसः । एतास्तु भगवता कालकर्मादिसम्बन्धेभ्योऽपि सर्वदा रक्ष्यन्ते, किं पुनः पुरुषान्तरसम्बन्धादिति अवने

रक्षणे एव चरन्तीति तिष्ठन्तीति । इदं च दावानलादिभ्यो मोचनात् सिद्ध्यति।पुत्रोत्पत्त्यादिकं तु सर्वभवनसमर्थादलौकिकप्रकाराद्भगवत एव।गोपानां तु, मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारानितिन्यायेनाभिमानमेव सर्वत्र व्यवहाररक्षार्थे तद्वार्त्तागोपनेन एतद्रसपोषायैव भगवता क्रियते ॥ अत्रेदं हृदयम् ॥ गोपालपूर्वतापनीये कस्य विज्ञानेनाखिलं विज्ञातं भवति इति मुनीन्द्रप्रश्ने गोपीजनवल्लभ इति। पुनः प्रश्ने, तानुवाच ब्राह्मणः पापकर्षणो गोपीजनाविद्याकलाप्रेरक इति सकलं परं ब्रह्मैतद् यो ध्यायति रसति भजति सोऽमृतो भवतीति श्रूयते । तत्र गोपीजनाश्च ता अविद्याकला इति कर्मधारयेण भगवच्छक्तित्वमतासु स्फुटति। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिश्च भवति। तथाच न भगवच्छक्तीनामन्योपयोगः सम्भवतीति। एतदेव गोपीचन्दनोपनिषदि पठ्यते, गोप्यो नाम विष्णुपत्न्यः स्युरिति । अतः केवलभगवदीयत्वं नान्यासु । एतदभिसन्धायाह स्त्रीविशेषणम् । व्यभिचारदुष्टा इति । सर्वस्य वशी सर्वस्येशानः । भर्त्ता सन् भ्रियमाणो बिभर्त्तीति श्रुतेः। भर्त्तेति स्मृतेश्च जीवमात्रस्यैव भगवान् भर्त्ता इति तं विहाय गौणभर्त्तृसेवनाद् व्यभिचारः । अयमेवार्थः श्वेताश्वतरषष्ठाध्याये, तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ※ पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यमित्युक्तः । अतो बह्वेव वैलक्षण्यमिति भावः । पुरुषेभ्योऽप्याधिक्यमाह । कृष्ण इति । सन्ति नारदब्रह्मादयो भक्तास्तथाप्येष भावः क्व तेषु वर्त्तत इत्यर्थः । चकाराद् व्यभिचारदोषरहितायां लक्ष्म्यामपि नाय भावः। नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ※ रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य

उदगाद् व्रजवल्लवीनामिति वाक्यात् ।एष इति स्वानुभव उक्तः।
तथापि भगवति ईश्वरत्वेन ज्ञानाभावाल्लौकिकत्वेन ज्ञानस्य च
जघन्यत्वात् कथं ब्रह्मादिभ्योऽप्युत्कर्ष इत्याशङ्क्याह । नन्वीश्वर
इति । अत्रायं भावः । फलाधिक्येनैवाधिक्यं, न तु साधनाधि-
क्येनेति। अत्रेदं बोध्यम् । सिद्धान्ते रसात्मकं विरुद्धधर्माधिकरणं
साकारमेव परं ब्रह्म । आत्मैव पूर्वमासीत् पुरुषविध इति श्रुतेः ।
वक्ष्यते चोपरिष्टात् । फलं च ब्रह्मानन्दः । स चैतासु यथा, तथा
न क्वापीति । किञ्च । मुख्यसाधनानुग्रहस्य सत्त्वान्न किञ्चिदे-
तत् । एतदेवाह । विदुषोऽपीश्वरत्वेन ज्ञानवतोऽपि अनुभजतः
शास्त्रार्थत्वेन ज्ञात्वा भजतः पुरुषस्य किं साक्षादयमीश्वरः श्रेय-
स्तनोति, अपि तु नेति काकूक्तिः । तेषां भगवज्ज्ञानवचनभक्त्या-
दिभगवद्धर्मैरेव पुरुषार्थसिद्धिर्न तु भगवानागत्य किञ्चित् करोती-
ति । अस्तु वा कदाचिद् भक्त्यतिशये गजेन्द्रस्येव पुरुषार्थदानं
तथापि किमगदराज इव श्रेयस्तनोति । अन्येषु विवक्षितार्थस्या-
तिगोप्यत्वाद् दृष्टान्तव्याजेनाह । अत्राऽयमर्थः । एका तदङ्घ्रि-
कमलं सन्तप्ता स्तनयोरधादिति न्यायेन विरहानलसन्तप्तहृदयगत-
स्मररोगशमनाय यथैकैकमङ्गं भगवतः स्वहृदयादिदेशेषु एताः
स्थापयन्ति न तथा ब्रह्मादयः । यत ईश्वरान्नित्यं बिभ्यत्येव ।
ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धा इति वाक्यात्।तत्रापि नैता-
सु भगवतः प्राधान्यं, किन्तु एतासामेवेत्याह । उपयुक्त इति। य-
थौषधस्य तापरोगनिवर्तकत्वेनैवोपयोगो, न मुख्यत्वं, किन्तु
पुरुषस्य, तथात्राऽपि।सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां
परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति
श्रुतौ अप्राधान्यार्थकविभक्तिप्रयोगेण ब्रह्मणो गौणत्वं, भक्तस्यैव
मुख्यत्वमिति प्रतिपादनात् । अथवा काकूक्तिर्ज्ञेया । तथाहि ।

त्रिगुणो जनस्य किमीश्वरः श्रेयस्तनोति।अयमर्थः। कर्तुमकर्तुमन्यथा कर्त्तुं समर्थो हि ईश्वरः। तद्यथा मरणासाधनेनापि स्तनपानेन पूतनाप्राणहरणम् । तस्मै स्तनं दुर्जरवीर्यमुल्बणं घोराङ्कमादाय शिशोर्ददावथ * गाढं कराभ्यां भगवान् प्रपीड्य तत्प्राणैः समं रोषसमन्वितोऽपिबदिति वाक्यात् । अकर्त्तुं यथा स्वरूपं दृष्टवतोऽपि मुचुकुन्दस्यामुक्तिः । क्षात्रधर्मस्थितो जन्तून् न्यवधीर्मृगयादिभिः * समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥
जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः। भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलमिति वाक्यात् । नच साधनाभावान्न मुक्तिरिति शङ्क्यम् । स्तुतिविरोधात् । अस्त्वेव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनीति भगवद्वाक्याच्च। अन्यथा कर्त्तुं— विरुद्धसाधनेनापि फलं दातुं यथा कामभयद्वेषादिभिर्मुक्तिः सगुणभक्तकंसचैद्यादीनाम्।कामाद्गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः*सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो इति वाक्यात्।न हि ब्रह्मादिष्वेवं रूपं प्रकटीकृत्य फलं प्रयच्छति । यतो वाङ्मात्रमपि नान्यथा करोति । अत एव स्वरूपमप्यप्रदर्शयित्वा तपस उपदेशः। एतासु तु पूर्णकामत्वात्मारामत्वादीन् स्वरूपधर्मानप्यन्यथा कृत्वा प्रयच्छति । आत्मारामोऽप्यरीरमदिति वाक्यात् । इदं तु विरुद्धधर्माश्रयत्वाद् ब्रह्मण उपपन्नम् । ननु तथाप्यात्मारामो धर्मरक्षकः सर्वेश्वरोऽपि किमित्येवं परदाराभिमर्षणं कृतवानिति चेत्। हंतेदृशं मौर्ख्यं ते कुतस्तन्न जानीमः । किमेतदीश्वराणां चरित्रं न भवतीत्युच्यते । आहोस्विदन्यार्थमागतोऽन्यत करोतीति । न हि किञ्चिद् घटनार्थमागतः किञ्चिन्न विघटयति। न ह्यन्यार्थमप्यागतः स्वधर्मं परित्यजति । यथा प्रकाशनार्थमागतो दीपो गृहेण स्पृष्टश्चेद्दहत्येव । अतो विद्यमानाकरणमविद्यमानकरणं चेश्वरधर्मः ।

अन्यथेश्वरत्वमेव व्याहन्येत । न हि वणिजामिव धर्मोनियमोऽस्ति सर्वकर्मसु । किञ्च, न हि वह्निः सर्वान् दहन्नवद्यभाग् भवति— सर्वं भक्षयन्नपि अभक्ष्यभक्षको भवति—तथा सर्वं पिबन् सर्वत्र प्रविशन् सर्वत्र संबद्धस्तत्तत्कारी भवति, किं पुनः, न तत्र सूर्यो भाति न चन्द्रतारकमित्यादिश्रुतिप्रतिपादितमाहात्म्यः सर्वेश्वरः ॥

ननु भक्तिरसस्य क्वाप्यदर्शनात् कथं ब्रवीति भवान् भक्तिरसनिमग्न इति । कुतो न रसान्तरेऽन्तर्भाव इति चेदुच्यते । रसो हि, विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतोक्तः । एतद्विवृण्वते स्थायिनं विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्यपोषकभावरूपात् संयोगात् सम्बन्धाद्रसनिष्पत्तिरुत्पत्तिरभिव्यक्तिः । पुष्टिश्चेत्यर्थः । तथाहि । ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, कटाक्षभुजाक्षेपणादिभिरनुभावैः प्रतीतियोग्यः कृतो, व्यभिचारिभिरुत्कण्ठादिभिः पोषितो, रामादावनुकार्ये रसः । नटे तत्तुल्यरूपतानुसन्धानबलाद् आरोप्यमाणः सामाजिकानां साश्चर्यानुभवश्चमत्कारहेतुरिति भट्टलोल्लटप्रभृतयः।तदन्ये न सहन्ते । तत्र दण्डादीनां निवृत्तौ घटादीनामिव विभावादिनिवृत्तावपि रसस्यावस्थानप्रसङ्गः । किञ्च रसस्य परगतत्वेन प्रतीतौ स्वास्वादनीयत्वाभावेन सर्वदा रसस्य न रसोऽस्तीत्येवमाकारेण ताटस्थ्यप्रसङ्गः । स्वगतत्वेन प्रतीतौ तु चर्व्यमाणत्वानुभीयमानत्वयोर्विरोधेऽन्तःकरणे दुःखित्वप्रसङ्गेन तत्र प्रवृत्त्यभावप्रसङ्गश्चेति भट्टनायकः । तत्र सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधः । नच तज्ज्ञानमेव चमत्कारहेतुः । शाब्दतज्ज्ञानेऽपि तदापत्तेः । लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गः । नचानुभवादिविज्ञानबलायात आरोपस्तथा, न तु साक्षा-

त्कार इति वाच्यम् । चन्दनमुखादौ वैपरीत्यदर्शनात् । अन्यथैवोपपत्तौ तादृशकल्पनायां मानाभावाच्चेति काव्यप्रदीपकृत् । उत्पत्तिपक्षे आलम्बनस्य रसं प्रति जनकत्वेऽप्युद्दीपनस्य न रसं प्रति जनकत्वम् । उद्दीपकत्वहानिप्रसङ्गात् । नापि पोषकत्वम् । व्यभिचारिणामेव तथात्वात् । नापि व्यञ्जकत्वम् । अभिव्यक्तेर्भट्टलोल्लटादिभिरनङ्गीकारात् । नच तैरसतोऽभिव्यक्तिर्नेष्यते, उत्पन्नस्य पश्चादिष्यते इति वाच्यम् । अभिव्यक्तेर्ज्ञप्तिपर्यायत्वेन अनुभावादीनामेव कार्यत्वात् । नाऽपि ईषद्विशयाधानहेतुत्वमुद्दीपकत्वम् । जनित इति पदविरोधादिति सरस्वतीतीर्थः । अदृष्टाऽनुकार्यसुखरागादीनां रसानुदयप्रसङ्गात् । अनुकारस्य तज्ज्ञापकत्वेऽन्योन्याश्रयप्रसक्तिः । किञ्च, माश्चर्यानुभव इति कीदृशोऽनुभवः । सामाजिकानां न मानससाक्षात्कारः। असन्निकर्षात् । नाप्यनुमितिः । गृहीतरामविभेदेन नटे तज्जरसाद्यनुमितौ बाधादिति विस्तारिकाकृत् । श्रीशङ्कुकस्तु अनुमितिपक्षमङ्गीकृत्य एवमाह।स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपसम्बन्धाद्रमस्य निष्पत्तिरनुमितिरित्यर्थः। तथाह, नियमविषया धीः सम्यग्धीः। यथा राम एवायमयमेव राम इत्ययोगान्ययोगव्यवच्छेदविषये । अनन्तरावतीर्णबाधा तु मिथ्या धीः । यथौत्तरकालिके, न रामोऽयमिति बाधे, रामोऽयमिति।विरुद्धोभयकोटिका तु संशयः।यथाऽयं रामो न वेति। सदृशोभयविषया धीः सादृश्यधीः। यथा राममदृशोऽयमिति । ताभ्यो लोकप्रसिद्धाभ्यो विलक्षणा या चित्रे तुरगोऽयमितिवद्रामोऽयमिति द्वितीया। प्रथमं पक्षभूतो नटो विषयीक्रियते । ततस्तत्राविद्यमानमपि विभावादित्रयं लिङ्गमवगम्यते। पूर्वमेव रोमाञ्चाद्याविर्भावने गुरुशिक्षामासाद्य कृतातिशयिताभ्यासेन नटेन, सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः *

मनोरथश्रीर्मनसः शारीरिणी प्राणेश्वरी लोचनगोचरं गतेति ॥ दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च * अविरलविलोलजलदः कालः समुपागतश्चायमित्यादिकाव्यानुसन्धानबलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात् । अथ तैः कृत्रिमत्वेनातल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात् स्थायी रत्यादिरनुमीयते । सैव चानुमितिः सचमत्काररूपा चर्वणा । अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते । चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः । ननु साक्षात्कार एव सचमत्कारो, नानुमित्यादिरपि । अन्यथा सुखादावनुमीयमानेऽपि स स्यात्। न स्यात् । वस्तुसौन्दर्यबलाद्रसनीयत्वेनास्यापि सामान्याऽनुभववैलक्षण्यात्।तथापिस्थायिनां नटेऽसत्त्वात्तद्द्वारेणानुमितिरेव कथं स्यादितिचेन्न। अभावनिश्चयाभावात् । स्थायितया सम्भाव्यमानत्वादिति । एतदप्यहृदयग्राहीति बहवः । यतः प्रत्यक्षमेव ज्ञानं सचमत्कारं, नानुमित्यादिरिति लोकप्रतीतिमवधूयान्यथाकल्पने मानाभावः। सूत्रस्यान्यथैव योजनसम्भवादिति काव्यप्रदीपकृत्। रसस्य प्रतीतिः परगतत्वेन स्वगतत्वेन वा । नाद्यः । स्वरसनीयत्वाभावेन सर्वदा रसस्य नटे रसोऽस्तीत्येवमाकारेण तटस्थत्वप्रसङ्गात्।न द्वितीयः। अनुमीयमानत्वचर्व्यमाणत्वयोर्विरोधात् । करुणे दुःखित्वप्रसङ्गेन तत्र प्रवृत्त्यभावप्रसङ्गाच्चेति भट्टनायकः । नटेऽनुमीयमानो रत्यादी रसः ? सामाजिकनिष्ठं तदनुमानं वा । नाद्यः।सामाजिकानामरसिकत्वापत्तेः । तत्रानुमितिमात्रसम्भवात् । नाऽपरः । अनुमितेः सुखानात्मकत्वेन तद्दोषतादवस्थ्यात् । न च वेदान्तिमीमांसकयोर्जिज्ञास्यसुखत्वाङ्गीकृतिः । साक्षात्कारस्यैव तयोस्तत्त्वाङ्गीकारेणानुमितौ तदयोगात् । एवं लौकिकरसानुमिते-

रपि रसत्वं स्यात् । अनुकर्त्तर्यनुमीयमानस्य तस्यासत्त्वोपगमे अनुकार्ये वस्तुसतस्तदव्याकोपात् । नच विभावादीनामुपायानामलौकिकत्वेन तदलौकिकत्वम् । असतस्तदनुपपत्तेः । धर्मिग्राहकप्रमाणस्यैवालौकिकत्वसाधनसामर्थ्यत्वादिति विस्तारिकाकृत् ॥ भट्टनायकस्तु स्थायिनां विभावादिभिः संयोगाद् भोग्यभोजकभावसम्बन्धात् । रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः । नच भोगपक्षेऽपि दोषावकाशः । भोगस्यालौकिकत्वात् । तथाप्यन्यनिष्ठः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्योऽन्यथातिप्रसङ्गादितिचेत् । उच्यते । शब्दात्मनः काव्यस्य त्रयो व्यापाराः । अभिधा भावकत्वं भोजकत्वं च । तत्राऽभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा । भावकत्वं साधारणीकरणम् । तच्च सीतादिविशेषणं कामिनीत्वादिसामान्येनोपस्थितिः । तेन व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते । अनुकार्यीयत्वेनोपस्थाप्यन्ते । स्थाय्यनुभावादीनां च सम्बन्धविशेषानवच्छिन्नत्वेनाऽन्त्यं व्यापारद्वयं नाट्येऽपि । एवं काव्ये नाट्ये वा द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारमाहिम्ना तथा कृत एव स्थायी भुज्यते । भोगश्च सत्त्वगुणोद्रेकात् प्रकाशते य आनन्दस्तत्स्वरूपा अनन्यालम्बना या संवित् तत्स्वरूपो लौकिकसुखानुभवविलक्षणः । सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात् सुखदुःखमोहाः प्रकाश्यन्ते । तत्रोद्रेकश्च स्वेतरावभिभूय अवस्थानमिति सांख्यसिद्धान्तानुसारेण विवृणुते । तदपि तादृशव्यापारद्वयकल्पने प्रमाणाभावात् । भुक्ते ज्ञानातिरेकस्यानुभवबाधितत्वेन निष्पीड्यमानस्य चाभिव्यक्तिपक्ष एवान्तर्भावान्न सम्यगिति काव्यप्रदीपकृत् । प्रकृतिव्यतिरिक्तस्य भोगशब्दार्थस्य निर्वक्तुमशक्यत्वादुत्पत्त्यनङ्गीकारे रसस्य नित्यत्वप्रसङ्गात् । अभिव्यक्त्यतिरिक्तस्यान-

ङ्गीकारे रसस्याऽसत्त्वप्रसङ्गात्। उत्पत्त्यभिव्यक्त्यतिरिक्तपक्षसद्भावे प्रमाणाभावादिति सरस्वतीतीर्थः। अत्र पक्षे भावनोपनीतो रामादिरत्यादिश्चिदानन्दात्मकताऽसाक्षात्कारविषयो रस इति पर्यवस्यति। तत्र सम्भोगेच्छारूपस्य रामादिरत्यादेः सुखरूपत्वाभावेनारसत्वात्। तस्य तदेकरूपत्वात्। नच सुखात्मकज्ञानविषयत्वेन तस्याः स्वादुता। प्रमाणाभावात्। किञ्च रागसम्भेदे विद्वत्प्रकाशो न स्यात्। रागिणामेव काव्यनाट्यादितश्चमत्कारात्। विरक्तस्य तद्विरहादिति विस्तारिकाकृत्॥ आचार्याभिनवगुप्तपादास्तु स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धाद् विभावादीनामेव वा परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिः। तथाहि। लोके प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं तद्वतां सामाजिकानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालङ्कारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावादिशब्दव्यपदेशयोग्यदशाविशेषविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते। नन्वेवं येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्वासनाविरहिणां रसाभिव्यक्तिः किं नास्त्येव। कः सन्देहः। अतः शृङ्गारिणामेव शृङ्गारस्य निर्विण्णानामेव शान्तरसस्याभिव्यक्तिरित्याद्यनुभूयते। किञ्च, अपरापि स्वाभाविकी वासना सहकारिणी। यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तं, वासनाचेन्न हेतुः स्यात् स स्यान्मीमांसकादिष्विति। ननु तथापि अन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिरितिचेन्न। ममैवैते, शत्रोरेवैते, तटस्थस्यैवैते इति सम्बन्धिविशेषपरिहारनियमस्य चाज्ञानात् तेषां विभावादीनां साधारण्येन प्रत्ययात्। तथाच सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियत-

प्रमातृत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितमातृतावशोन्मिषितवेद्यान्तरसम्पर्कशून्याऽपरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वीकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवास्वादयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः । स च न कार्यः । विभावादिविनाशेऽपि तत्सम्भवप्रसङ्गात् । नापि ज्ञाप्यः। सिद्धस्य तस्याभावात् । अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः । कारकज्ञापकाभ्यामन्यल्लिङ्गं क्व दृष्टमिति चेन्न । अलौकिकत्वसिद्धेर्भूषणमिदं, न दूषणम् । चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम् । लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यसंस्पर्शनरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनाविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्ययोऽप्यभिधीयताम् । तद्ग्राहकं च प्रमाणं न निर्विकल्पकम् । विभावादिपरामर्षस्य निर्विकल्पकजननायोगात् । नापि सविकल्पकम् । चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य स्वसंवादेनासिद्धत्वात् । उभयाभावरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतां गमयति, न तु विरोधमित्याहुः ॥ परिपूर्णो रस्यमानो रसः । भावविभावव्यभिचारिभावैर्मनोविश्रामो यत्र क्रियते स वै रसः । प्रबुद्धस्यापि भाववासना वा रस इति केचित् ॥

रसाश्चाष्टौ । शृङ्गारहास्यकरुणरौद्रवीरभयानकाः * बीभत्साद्भुतसंज्ञौ च नाट्ये चाष्टौ रसाः स्मृता इति भरतोक्तेः । तेषां स्थायिभावा अपि, रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा * जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिता इति भरतोक्तेरष्टौ।

तत्रेष्टवस्तुसमीहाजनिता मनोविकृतिः परिपूर्णा रतिः । मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं वा । तत्प्रकृतिकः शृङ्गाररसः । अव्रीडादिभिश्चेतोविकासो हासः । तत्प्रकृतिको हास्यरसः । रसनालिङ्गन इष्टविश्लेषजनितमनोविकारः शोकः । तदुक्तम्, इष्टनाशादिभिश्चेतोविकारः शोकशब्दभाग् इति । तत्प्रकृतिकः करुणः । इष्टविश्लेषजनितविप्रलम्भशृङ्गाररसस्य करुणरसत्ववारणाय रसनालिङ्गन इति।तथाच यूनोरेकतरस्मिन् मृते प्रलापः, करुणरसः। जीवतोर्विश्लिष्टयोः प्रलापः शृङ्गारः । अवज्ञादिकृतः प्रमोदप्रतिकूलो मनोविकारः क्रोधः । तत्प्रकृतिको रौद्रः। दशमुखदुर्वचनाऽवमानितस्य रघुकुलोत्तंसरामस्य वीररसेऽतिव्याप्तिवारणाय प्रमोदप्रतिकूल इति । शौर्यदयादानान्यतरकृतः परिमितो मनोविकार उत्साहः । तत्प्रकृतिको वीरः । भयं, रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयमिति । तत्प्रकृतिको भयानकः । अहृद्यदर्शनस्पर्शनस्मरणजनितोऽपरिपूर्णो मनोविकारो जुगुप्सा । तदुक्तं, जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनादिति । तत्प्रकृतिको बीभत्सः । चमत्कारदर्शनस्पर्शनस्मरणजनितोऽपरिपूर्णो मनोविकारो विस्मयः । तदुक्तं, 'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनादिति । इयाँस्तु विशेषः । शृङ्गारादौ चमत्कारदर्शनजनितमनोविकृतेर्यत्राङ्गतया भानं तत्र शृङ्गारादय एव रसाः । यत्र तु प्राधान्येन भानं तत्राद्भुत एव रस इति । यद्यप्यष्टौ रसास्तथापि शान्तरसोऽपि सर्वसंमत्या नवमो भवति।तथा भक्तिरसोऽपि भक्ताऽनुभवसिद्धत्वाद्दशमो भवितुमर्हति । तस्य स्थायिभावः स्नेहः । रतिर्देवादिविषया भाव इत्यभिधीयत इति वाक्यात् । तस्य चोक्तस्थायिभावातिरिक्तत्वमिच्छाद्यतिरिक्तब्रह्मधर्मत्वव्यवस्थापनादुक्तप्रायमेवेति न पुनर्वितन्यते । तथाच स्थायिभावभेदाद्भक्तिरसभेदः

केन वार्यताम्। नच कथं स्थायिभावभेदो, भक्तिशृङ्गारयो रतेरेव स्थायित्वादिति वाच्यम्। शृङ्गारे मनोऽनुकूले सुखसंवेदनरूपाया रतेस्तथात्वेन भक्तौ च स्नेहरूपायास्तथात्वेन भेदात्। नायकस्य नायिकायां तस्याश्च तस्मिन् या रतिः सा शृङ्गारः। देवगुरुपित्रादिषु भक्तिः पुत्रादीनां तेषां च तेषु या रतिरिति श्रीपुरुषोत्तमाः। रसतरङ्गिणीकारस्तु श्रद्धार्द्रतास्थायिभावकयोर्भक्तिवात्सल्ययो रसत्वमाशङ्क्य भक्तिवात्सल्ये शान्तिकरुणरयोन्तर्भावयाञ्चकार। अन्ये पुना, रतिर्देवादिविषया व्यभिचारी तथाञ्जितः॥ भावः प्रोक्त इति पठन्तो भावेऽन्तर्भावयाञ्चक्रुः।तत्र साहित्यदर्पणकारः। स्फुटं चमत्कारि तथा वत्सलं च रसं विदुः॥ स्थायि वत्सलता स्नेहः पुत्राद्यालम्बनं मतम्॥ उद्दीपनानि तच्चेष्टाविद्याशौर्यदयादयः। आलिङ्गनादिसंस्पर्शशिरश्चुम्बनमीक्षणम्॥ पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्त्तिताः। सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः। पद्मगर्भच्छविर्वर्णो दैवतं लोकमातर इति नवरसभेदं वदन्, एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम्॥ आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देय वा चरणपुष्करकद्वयं ते॥ यथा वा, यदाह धाव्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम्॥ अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भक इत्युदाहरंस्तन्मतं परिजह्रे। युक्ततरं चैतत्।अन्यथा रौद्रवीरयोरपि भेदो न स्यात्। किञ्च रसभेदेऽनुभवोऽपि नियामकः। अत एव रौद्रवीरयोः स्थायिभावौ व्यवस्थापयन् रसतरङ्गिणीकृन्मत एवात्र साक्षीति अनुभवमेव शरणीचकार। तथाभिप्रायोऽङ्गस्थायिभावकं मायिकरसमप्यङ्गीचक्रे। नच, रतिर्देवादिविषयेत्यस्य विरोधः। रतावुद्बुद्धमात्रत्वविवक्षणेन पूर्णत्वस्य अविवक्षणात्। एतेन, आदिपदाद्

गुरुमुनिनृपपुत्रादिविषयेतिकाव्यप्रकाशोक्तमपि सङ्गतम्। सिद्धान्ते इयान् विशेषः । वात्सल्यस्य भक्तिपदवाच्यत्वं, पुत्रादिविषयकस्य तु न। भगवद्भक्तः गुरुभक्त इतिवत् पुत्रभक्त इति प्रयोगदर्शनात् । स चोद्धवाऽम्बरीषादौ प्रसिद्ध एव ॥

किञ्च, यत्र मनः सर्वेन्द्रियाणाम् आनन्दमात्रकरपादमुखोदरादिभगवद्रूपता तत्र भक्तिरस एव । यथा, इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः * लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ आहूय दूरगा यद्वत् कृष्णस्तमनुकुर्वती । वेणुं क्वणन्ती क्रीडन्तीमन्याः शंसन्ति साध्विति ॥ कस्याश्चित् स्वभुजं न्यस्य चलन्त्याहापरा ननु इत्यादि।यथावा, प्रेमातिभरनिर्भिन्नपुलकाऽङ्गोऽतिनिर्वृतः * आनन्दसंप्लवे लीनो नाऽपश्यमुभयं मुन इति। निर्वेदपरिपोषः शान्तरसः । उदाहरणम् । अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा * तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः । यथा वा, हेयं हर्म्यं निकुञ्जकुञ्जभवनं चेयं प्रदेयं धनं पेयं तीर्थजलं हरेर्भगवतो गेयं पदाम्भोरुहम् * नेयं जन्म चिराय दर्भशयने धर्मे निधेयं मनः स्थेयं यत्र सितासितस्य सविधे ध्येयं पुराणं मह इति । ननु स्नेहस्यास्थिरत्वात् कथं स्थायिभावत्वमितिचेन्न । निर्वेदादिवदुपपत्तेः । श्रीपुरुषोत्तमास्तु कालान्तरे तत्कार्यस्य दर्शनात्तद्विषयकसंस्कारे मानाभावाच्च स्थायित्वमेवेत्याहुः । तथोदाहरणमपि । आविर्भावदिने न चैव गणितो हेतुस्तनीयानपि क्षीयेताऽपि न चापराधविधिना नत्या न यद्वर्द्धते * पीयूषप्रतिवादिनस्त्रिजगतीदुःखद्रुहः सांप्रतं प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठता लाघवमिति। तदुक्तं श्रीमदाचार्यैः, अष्टौ नाट्ये रसा इति विशेषाभिप्रायम् ।

भक्तिरसोऽपि रसदृष्टिवन्निपुणैरभिनेय इति । युक्तं चेदम् । अन्यथा शान्त्यादिरसेभ्यस्तिलाञ्जलिर्दीयताम् ॥

अत्र कश्चिद् विपरीतवादी— पापक्षयाङ्गी कीर्त्तनं, कीर्त्तनाऽङ्गं भक्तिः । केचित् केवलया भक्त्या वासुदेवपरायणाः * अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्कर इति वाक्यात् । नारायणपरायणपदेन भक्तिवैशिष्ट्यमुच्यते । भक्तिपदेन कीर्त्तनमुच्यते । सा च रसरूपेति प्रललाप । तन्न । मुख्यभक्तेर्भगवत्सायुज्याद्यङ्गत्वात् । भक्तेर्बहुविधत्वस्य वक्ष्यमाणत्वात् । उक्तव्याख्यानस्याऽप्रामाणिकत्वाच्च । अपरस्तु महता संरम्भेण व्यक्तभगवदाकारतारूपरत्याख्यस्थायिभावमङ्गीकृत्य परमानन्दसाक्षात्कारो भक्तिरस इत्याह । तन्न । भगवदाकारताया रतित्वाभावात् । सा हि भवता द्रवीभूते चेतसि प्रतिबिम्बितभगवद्रूपत्वेनाङ्गीकृता, रतिपदं च स्नेहे रूढमिति कथमनयोः सामानाधिकरण्यमिति । किञ्च । स्थायिभाव एव स्वपरिपोषे रसतामेतीति प्रसिद्धम् । एवञ्च भवदङ्गीकृतरतेः परिपोषेण परमानन्दसाक्षात्कारात्मकत्वं सम्भवति । अपि तु प्रतिबिम्बपरिपोषेण तदात्मकत्वमिति । किञ्च । प्रतिबिम्बासम्भवान्नीरूपस्य । नच रूपवत्त्वं न प्रतिबिम्बप्रयोजकं, रूपप्रतिबिम्बदर्शनादिति भ्रमितव्यम् । अप्रयोजकत्वात् । न हि सितावैशिष्ट्यस्य मिष्टताप्रयोजकत्वे सितायास्तत्त्वाप्रयोजकत्वं भवति । किञ्च रूपवत्त्वं रूपमेव । तथाच द्रव्यप्रतिबिम्बप्रयोजकं यथा रूपं तथा रूपप्रतिबिम्बप्रयोजकं रूपमेवेति किमनुपपन्नम् । विशेषस्तु श्रीपुरुषोत्तमकृतप्रतिबिम्बवादादवगन्तव्यः । विस्तरभियात्र न लिख्यते ॥

अत्र प्रसङ्गादन्ये रसाः प्रोच्यन्ते । ते च श्रीभागवते, मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान् गोपानां स्वजनो-

ऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः * मृत्युर्भोजपतेर्विराड्विदुषां तत्त्वं परं योगिनां वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रज इति श्लोके प्रसिद्धाः। ते च, रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा * भयानकश्च बीभत्सः शान्तिर्भक्तिरसस्तथेत्याचार्योक्तेस्तेनैव क्रमेण प्रोच्यन्ते । तथाहि । मारकरूपे भगवति क्रोधस्थायिभावकरौद्ररसानुभवितारो मल्लादयः। तेन रौद्रप्रकृतयोऽधिकारिणः। नरवरे अद्भुततरे विस्मयस्थायिकाद्भुतरसानुभवितारो गोपाः । ते च हास्यप्रकृतयो नराः । स्मररूपे भगवति रतिस्थायिकशृङ्गाररसानुभवित्र्यः स्त्रियः। तेन शृङ्गारादिप्रकृतयः स्त्रियोऽधिकारिणः । स्वजने भगवति विलक्षणचेष्टवति हास्यरसानुभवितारो गोपाः।तेन हास्यप्रकृतयो गोपा अधिकारिणः। यदुकुलोत्तंसे भगवति उत्साहस्थायिकवीररसानुभवितारः क्षितिभुजः। तेन सद्विलक्षणा वीरप्रकृतयः क्षितिभुजोऽधिकारिणः। सदसतोर्भक्तिबीभत्सरसाधिकारस्य वक्ष्यमाणत्वात्।प्रद्वाविप्रतिरोधस्तु शास्तृत्वज्ञानात् । रसस्तूत्पद्यत एव । पामरकृतराजवधूदर्शनजनितशृङ्गाररसवत् । तेन शास्तृत्वबुद्धावपि अधमत्वबुद्धेरेव रसविघटकत्वेन स्वस्मादुत्कृष्टे वीररसो युक्त एव । तेन इमा राजसाः क्षितिभुजोऽधिकारिण इत्युक्तम् । पुत्रत्वादिना प्रतीयमाने भवति करुणरसानुभवितारौ पितरौ।यद्यपि वात्सल्यरस एव वाच्यस्तथापि अनुचितदर्शनेनेष्टविश्लेषसम्भावनया करुण एव रसः। तेन करुणप्रकृतयोऽधिकारिणः । तथा मृत्युरूपे भगवति भयानकरसानुभवितारः कंसादयः । तेन त एवाधिकारिणः। मदबिन्दुसंसर्गेण विगतराजनरूपे भगवति बीभत्सरसानुभवितारो बीभत्सप्रकृतयो लौकिकाः। तेन त एवाधिकारिणः। श्रीधर्या तु विराट्शब्दं विकलार्थमङ्गीकृत्य, क्व वज्रसार-

सर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ * क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनाविति विकलत्वमुक्तम्। तत्र करुणरसो भवितुं युक्त इति प्रतिभाति। अत एव शिशुत्वप्रतीतभगवति करुणरस उक्तः। अन्यत्र च, उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंस-स्फिक्पृष्ठपिण्डमांसाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा * आर्तः पर्यस्त-नेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपुट-गतमपि क्रव्यमव्यग्रमत्तीति बीभत्सरस उदाहृतः। ननु सत्त्वरूपे भग-वति शान्तरसानुभवितारो योगिनः सात्त्विकाः। तेन तेऽधि-कारिणः। स्वामित्वेन देवतात्वेन च प्रतीयमाने भगवति भक्तिर-सानुभवितारो गुणातीताः। तेन त एवाधिकारिणः। तदेवमति-रिक्तो भक्तियोगः। स च क्वचिद्रतिशब्देन क्वचिद्भावशब्देन चाऽपि व्यवह्रियते। सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम * वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः॥ य एतत् पूतनामोक्षं कृष्णस्यार्भकमद्भुतम् * निशम्य श्रद्धया मर्त्यो गोविन्दे लभते रतिमित्यादिषु। केवलेन हि भावेन गोप्यो गावो नगा मृगाः * येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा॥ सर्वात्मभावो-ऽधिकृतो भवतीनामधोक्षजे इत्यादिषु च। मार्गत्वं तु फलार्थं मृग्य-माणत्वात्। तदित्थम्। सकलैरपि तत् परं ब्रह्मैतद्यो ध्यायति रसति भजति सोऽमृतो भवति, नायमात्मा प्रवचनेनेत्यादिश्रुतिषु मोक्षसाधनत्वं श्रूयते। तथा स्नेहो भक्तिरितिप्रोक्तस्तया मुक्ति-र्न चान्यथेति पञ्चरात्रे च तत्संस्थस्याऽमृतत्वोपदेशात्। तथा श्री-गीतायां च, भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन * ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥ मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः। निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति। भक्त्या-ऽहमेकया ग्राह्य इत्यादिषु। एवं भक्तियोग इति अध्यायनाम।

श्रीभागवते एकादशस्कन्धे, तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् * प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ मामेकमेव शरणमात्मानं सर्वदेहिनाम्।याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयमित्यत्र । केवलेन हि भावेन गोप्यो गावो नगा मृगाः * येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसेत्यत्र च । भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघेति । तथा तृतीयस्कन्धे । भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते इति । दशमे च भ्रमरगीतस्य संदेशे । मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् * अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथेति । तथा, या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः * अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तयेति च । युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् * चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं परामित्यत्र च । दिष्ट्या गृहेश्वर्यऽसकृन्मयि त्वया कृतानुवृत्तिर्भवमोचनी खलैः * सुदुष्करासौ सुतरां शिशोस्तथा ह्यसुम्भराया निकृतिञ्जुषः स्त्रिया इत्यत्रापि च । प्रथमस्कन्धेऽपि समाधिभाषायां, भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले * अपश्यत् पुरुषं पूर्णं मायां च तदुपाश्रयाम् ॥ यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् । परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो व्यासश्चक्रे सात्त्वतसंहितामित्यत्रापि ब्रह्मविदाप्नोति परं, तरति शोकमात्मवित्, आत्मलाभान्न परं विद्यते, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेत्यादिश्रुतिसहस्रैर्मोक्षसाधनत्वं ज्ञाने निश्चीयते । तथा, भक्त्या मामभिजानाति ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादिस्मृतिसहस्रैर्भक्तेर्ज्ञान एवोपक्षयो निश्चीयते । अत एव ज्ञानी त्वात्मैव मे मत इति स्तुतिरपि सङ्गच्छते । तथाच नैकयोपनिषच्छ्रुत्या

सर्वासामनादरो युक्त इति ॥ किञ्च जीवो ब्रह्मणाऽत्यन्तमभिन्नः। अज्ञानरूपोपाधिकृत एव, परं भेदो भासते। तच्चाविद्याख्यमज्ञानं ज्ञानेनैव निवर्त्तनीयं, न तु विजातीयभक्त्येति । तथाचाविद्यानिवृत्तेर्मोक्षत्वात्तदसाधकः कुतोऽपि भक्तिर्विवेकप्रयोजक इति ॥

अत्र बहवः। तत्रैके रामानुजाचार्याः— भक्तेरुपासनापर्यायत्वमिच्छन्तो ध्रुवास्मृतित्वं च स्वीकुर्वन्तः,आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति श्रुतौ ध्रुवायाः स्मृतेरपवर्गोपायतां श्रवणात् तस्याश्च स्मृतेः, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः * क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति श्रुत्यन्तरैकवाक्यतया दर्शनसमानाकारत्वं च वदन्तो, ब्रह्मविदाप्नोति परमित्याद्युक्तश्रुतिस्मृतिवाक्यानामविरोधमाहुः। अन्येतु व्यापारेण व्यापारिणोऽन्यथासिद्धिमनङ्गीकुर्वन्तो ज्ञानस्य भक्तिव्यापारत्वं वदन्तः पूर्वोक्तश्रुतिस्मृतीनामविरोधमाहुः। इतरे तु ध्येयैवमायुर्विज्ञानं मनोदोषोपशान्तय इत्यायुर्वेदस्थवाक्यात् तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः * गच्छन्त्यऽपुनरावृत्तिं ज्ञाननिर्धूतकल्मषा इति वाक्यं च पठन्तोऽश्रद्धामलक्षालनद्वारा ज्ञानस्य भक्तावुपयोगमङ्गीकृत्य अविरोधमाहुः। तथाच तेषां मते, तमेव विदित्वेत्यादिश्रुतीनां ब्रह्मवेदनेनाश्रद्धामलक्षालनाद् भक्तिं प्राप्नोतीत्यर्थः। मृत्योरतिक्रमो यस्या इति अतिमृत्युर्भक्तिः। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति वाक्यात्। एतच्छ्रुत्येकवाक्यतयान्याऽसामपि स्मृतीनां, ब्रह्मविदाप्नोति परमित्यादिश्रुतीनां च ज्ञानानन्तरं भक्त्या मुक्तिरित्यर्थ ऊहनीयः। भक्त्या मामभीत्यस्य विरोधस्त्वेवं परिह्रियते तैः। अस्मिन् वाक्ये यदि जानातीत्येवं स्यात्तदा भवदिष्टं सिद्ध्यति। परं, न त्वेवम्। अभिजानातीति पदात्। अभिज्ञा च ज्ञातज्ञानमुच्यते। तथाच

भक्त्यङ्गं पूर्वज्ञानं तत्फलरूपभक्तिप्रवर्त्तकमनन्तरं तस्या दार्ढ्यें भक्त्यर्थं भवति । ततो ज्ञानदार्ढ्येन भक्तिदार्ढ्ये सति विशत इति । तथाचात्राभिज्ञा प्रत्यभिज्ञा। भक्तिनिवेशः पूर्ववदिति ज्ञात्वा, भजन्ते मां बुधा भावसमन्विता इति वाक्यैकवाक्यतया यावान् यश्चास्मि तादृशं मामभिजानाति । ततस्तदनन्तरं तत्त्वतो ज्ञात्वा भक्त्या निविशत इत्यन्वय इति कश्चित्। एतद्व्याख्यानेऽभिज्ञा ज्ञानमेवातिरिक्तं, भक्त्या प्रवेशश्चेति ज्ञेयम् । भाष्ये आचार्यास्तु, परमासक्तिज्ञानपराणि—ब्रह्मविदाप्नोति परमित्यादीनि । लोके परमासक्तिः, सा सा सा सा जगतीत्याकारकज्ञानमेव । न तु, तत्त्वमस्यादिवाक्यजन्याहं ब्रह्मास्मीत्याकारकज्ञानपराणि । शब्दादपरोक्षस्य प्रागेव दूषितत्वादित्याहुः । निबन्धे आचार्यास्तु, तमेव विदित्वेत्यत्रैवकारो यथाश्रुतमेव व्याख्येयः । न तु, तं विदित्वैवेत्यन्यथा । तथाऽऽत्मलाभान्न परं विद्यते, तरति शोकमात्मविदित्यादिषु आत्मपदं ब्रह्मपरं, न तु जीवपरत्वेन व्याख्येयम् । समन्वयाध्याये जीवपरत्वेन सन्दिग्धतत्परत्वानामेव श्रुतिवाक्यानां द्वितीयपादे ब्रह्मपरत्वव्यवस्थापनेनासंन्दिग्धतत्परत्वानां ब्रह्मपरत्वे सन्देहाभावात् । एवञ्च ज्ञानस्य या साधनता सा नाभेदज्ञानत्वेन रूपेणापि तु साक्षात्कारत्वेन रूपेण।साक्षात्कारस्त्वाविर्भावाधीनः । आविर्भावस्तु, यमेवेति श्रुत्या वरणाधीनो, वरणं च भगवदधीनं, भगवाँश्च प्रेमाधीन इति प्रेम्णैव पूरणताऽत्रापीति ज्ञानसाधनताबोधकानां भक्तावेवोपक्षयः । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ यज्ञशिष्टाऽमृतभुजो यान्ति ब्रह्म सनातनमित्यत्रानुक्तेऽपि ब्रह्मज्ञाने कर्मोपक्षयवदित्याहुः । प्रेम्ण एवाविर्भावकारणत्वमग्रे व्युपाद्यम् । तृतीयाध्यायस्य तृतीयपादभाष्ये तु, अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसद्वत् तदुक्तमिति सूत्रेण, क्वचित्, परं ब्रह्मै-

तद् यो धारयति रसति भजति ध्यायति प्रेमति शृणोति श्रावत्युपदिशत्याचरति सोऽमृतो भवतीति भक्तेर्मुक्तिसाधनता श्रूयते। क्वचिच्च, तमेव विदित्वातिमृत्युमेतीति ज्ञानस्य साधनता श्रूयते इति किं साधनमित्याशङ्क्य श्रुतित्वाऽविशेषेण उभयोः कारणत्वे कारणवैजात्ये कार्यवैजात्यस्यावश्यकत्वान्मुक्तौ च तदसम्भवाद्, भक्त्या मामभिजानातीति वाक्याद्भक्तौ ज्ञानस्यापि सम्भवाज्ज्ञानेनैव मुक्तिरिति पूर्वपक्षे इत्थं समाहितम् । तुः पूर्वपक्षनिरासे। वाजसनेयके श्रूयते । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यऽस्थूलमनण्वित्युपक्रम्योपसंहारे, य एतद्विदित्वा प्रैति स ब्राह्मण इत्यक्षरवेत्तुर्ब्रह्मज्ञत्वमुक्तम् । जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते * वेदाध्यायाद् भवेद्विप्रो ब्रह्म जानाति ब्राह्मण इति वाक्यात् । तथाथर्वणे, अथ परा यया तदक्षरमधिगम्यते इत्यक्षरप्रापकं ज्ञानमुक्तम् । तच्च गीतायां ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति * समः सर्वेषु भूतेषु मद्भक्तिं लभते परामित्यत्र ब्रह्मभूतस्य भक्तिलाभोक्तेर्ब्रह्मभावस्य च स्वरूपलाभरूपत्वेनानन्दात्मकत्वादानन्दाविर्भावस्य चाविद्यानाशजन्यत्वादविद्यानाशस्य चाऽक्षरज्ञानजन्यत्वात् परप्राप्तिपूर्वरूपब्रह्मभावे विश्रान्तमेवाऽक्षरज्ञानमिति निश्चीयते । तेनैतद्वाक्योत्तरस्मिन्, भक्त्या मामभीतिवाक्ये पुरुषोत्तमविषयकं ज्ञानमुच्यते इत्यविरोधः । तच्च भक्त्येति करणत्वार्थकतृतीयानुपपत्त्या भक्तिव्यापार इति भाष्यप्रकाशे पुरुषोत्तमा आहुः ॥ तेन ज्ञानमार्गे इष्टप्राप्त्युपाये अदृश्यत्वास्थूलत्वादिगुणकं यदक्षरं तद्विषयकाण्येव ज्ञानानीष्टप्रापकतया निरूप्यन्ते, न तु पुरुषोत्तमविषयकाणीति ज्ञानविषयविशेषणबलान्निश्चीयते।तत्फलविचारे ब्रह्मविदाप्नोति परमिति श्रुतौ अक्षरात्परस्य प्राप्तिः फलत्वेनोच्यते । नचाक्षरमेव पुरुषोत्तम इति वाच्यम् ।परपदप्रयोग-

वैयर्थ्यापातात्। तल्लक्षणप्रमाणतो भेदात्। तथाहि। पुरुषोत्तम-लक्षणस्योपपादितत्वादक्षरलक्षणमुच्यते। तत्र, प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्त पुरा * यद्रूप ममधिष्ठाय तदक्षरमुदीर्यत इति वाक्यात्। पुरुषोत्तमस्यादिविभूतिरूपत्वं प्रकृतिपुरुषकारणत्वं वा तल्लक्षणम्॥

प्रस्थानरत्नाकरे तु पूर्वोक्तलक्षणमुक्त्वा, तथा तृतीयस्कन्धे तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् * विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मन इत्यत्रापि प्रकृतिपुरुषकारणत्वं तल्लक्षणमुक्तम्। तदपि पूर्वोक्तान्नातिरिच्यते। तथैकादशे, आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितमित्युपक्रम्य पठ्यते, तन्मायाफलरूपेण केवलं निर्विकल्पितम् * वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत्॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका। ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते इत्यनेनोक्तमिति श्रीपुरुषोत्तमाः। एतल्लक्षणं क्रमसृष्टिमनुरुद्ध्येति ज्ञेयम्। वस्तुतस्तु गणितानन्दत्वमेव लक्षणम्। गणितत्वं च परिच्छिन्नत्वे सति प्रजापत्यानन्दोत्कृष्टत्वम्। ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति श्रुतेः॥पुरुषोत्तमेऽतिव्याप्तिवारणाय विशेषणदलम्। प्रजापत्यानन्दादावतिव्याप्तिवारणाय विशेष्यदलम्। तेन युगपत्सृष्टिपक्षेऽपि नासम्भवः। एतदेव ब्रह्माव्यक्तकूटस्थतत्त्वसत्वगादिशब्दाभिधेयम्। ब्रह्मकूटस्थाव्यक्तादिशब्दैर्वाच्यो निरन्तर इति निबन्धात्॥ केचित्तु स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यं कूटस्थपदवाच्यमित्याहुः। तद्वारु। तत्र शक्तिग्राहकस्याभावात्। यद्यपि, सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या तदेव लक्षणं वक्तव्यम्। तथाप्यतिव्याप्त्यादिवारणगौरवभियेदमादृतम्। ननु तस्य पुरुषोत्तमवदनन्तत्वेन कथं तद्रूपानन्दस्य परिच्छिन्नत्वमिति चेद् न वयं परिमाणतः परिच्छिन्नत्वं वदामः, किन्तु स्वरूपतः। न हि

बहुशर्करास्वल्पशर्करासंपृक्ततुल्यद्रव्यनिष्ठमिष्टतयोः यावदाश्रयव्य पकत्वेन तौल्येऽप्येकतराधिक्यं न प्रतिपादयितुं शक्यमिति ॥

इदानीं प्रमाणतो भेदो निरूप्यते । तत्र तावत्, श्वेताश्वतरे पञ्चमाध्याये, द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे * क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्य इत्यक्षराद्भेद उक्तः । तथा कठवल्ल्याम्, इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः * मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिरिति अव्यक्तादक्षरात् परत्वमुक्तम् । तथा मुण्डके, दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः * अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः पर इति । तथा कठवल्ल्याम्— इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् * सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्॥अव्यक्तात् परः पुरुषो व्यापकोऽलिङ्ग एव च । तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छतीति । अयमर्थ उपबृंहितो गीतायाम् । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः * अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति । अत्राक्षरो जीव इति केचित् । तदसत् । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् * यं प्राप्य न निवर्तन्ते इति वाक्योक्तफलत्वासम्भवात् । जीवस्य नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तेश्च । नचाव्यक्त इति वाक्यानन्तरं पुरुषोत्तमोत्कृष्टत्वाश्रवणान्नैतस्योपष्टम्भकत्वमिति भ्रमितव्यम् । पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्यग्रे श्रावणात् । नचाव्यक्तपदस्य प्रकृतिवाचकत्वमिति नोक्तार्थबाधकत्वमिति वाच्यम् । सांख्यमतस्य, आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयतिचेत्यधिकरणेषु निरस्तत्वात् । तथाहि । एकेषां शाखिनां शाखासु सांख्यपरिक-

ल्पितार्थाः श्रूयन्ते, इन्द्रियेभ्यः परा ह्यर्था इत्यादिकाठकश्रुतौ। तत्र बुद्धेरात्मा अहङ्कारः परः। चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्र इत्यत्राहङ्कारेऽप्यात्मपदप्रयोगात्। ततो महान् महत्तत्त्वम्। ततोऽव्यक्तं प्रकृतितः पुरुष इति। एवं सूत्रांशेन आशङ्क्य समाधत्ते भगवान् सूत्रकृत् शरीरेत्यादि। नैवं वक्तुं युक्तम्। प्रकृतत्यागाप्रकृतपरिग्रहापत्तेः। एतस्याः पूर्वं हि, आत्मानं रथिनं विद्धि शरीरं रथमेव तु * बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इत्याद्युक्त्वाग्रे पठ्यते, इन्द्रियेभ्यः परेत्यादि। ततः शरीरेण रूप्यन्ते ये शरीरादयस्ते विन्यस्तास्तावकरूपकभावेन रथादिषु तेषां गृहीतिर्ग्रहणं तस्मात्। अयमर्थः। जीवप्रकरणं ह्येतत्। यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा * तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्तु विज्ञानवान् भवति युक्तेन मनसा तदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेरित्यादिश्रुतेः। तस्य च मुक्त्युपायो वर्ण्यते। विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः * सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति। तत्र साधको जीवो रथी। तस्य जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम्। स रथ इन्द्रियादिरूपसर्वसामग्रीसहितापराधीनयानत्वात्। तेन शरीरे रथरूपकम्। रथश्च यानाधीन इति शरीराधीनकेन्द्रियेषु हयरूपकम्। प्रग्रहश्च सारथ्यधीन इति मनोनियामकबुद्धौ सारथिरूपकम्। हयाश्च प्रग्रहाधीना इतीन्द्रियनियामके मनसि प्रग्रहरूपकम्। इन्द्रियाणि तु विषये प्रवर्तन्ते। हयाश्च मार्गरूपदेशे, सारथिश्च मार्ग एव हयान्नियुङ्क्ते इति विषयेषु गोचरपदेन मार्गरूपकम्। ततो रथिस्वरूपानिगमनायात्मेन्द्रियमनोयुक्तं भोक्तेत्यर्द्धश्लोकः। ततो मार्गस्य प्राप्याधीन-

त्वात् तदुबोधनाय प्रापकसामग्रीनिगमनपूर्वकाः, यस्त्वविज्ञानवा-
निलादयश्चत्वारः श्लोकाः।ततः प्राप्यस्येष्टस्य निगमनाय विज्ञान-
सारथिरिति पञ्चमः । तत्र मोक्षप्रणाड्या विषयाणामिन्द्रियेभ्यः
परत्वं कथमित्याशङ्क्य वक्ति, इन्द्रियेभ्यः परा इति । अयमर्थः ।
इन्द्रियेभ्यो हयेभ्योऽर्था विषयाः पराः मार्गतया निरूपणेन नि-
यामकत्वादुत्कृष्टाः । प्राणं च गन्ध इति न्यायेन भगवदिन्द्रियरूप-
तया तदाधिदैविकत्वात् तेषां नियामका इति बोध्यम् । न त्वा-
ऽऽकर्षकत्वादेव नियामकत्वं वक्तव्यम् । इन्द्रियैर्विषयाकृष्टैरिति ।
वाक्यात् कामिनीकुचदर्शनेन चक्षुराद्याकर्षस्य प्रत्यक्षत्वाच्चेति-
चेन्न । मोक्षप्रकरणत्वेन तथार्थस्यासङ्गतत्वात् । किन्तु, इन्द्रियेभ्यः
परत्वं यत् तद्भगवदीयतया मनसा सम्यग्भावितानामेव विषया-
णाम्।स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने *
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये॥मुकुन्द-
लिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् । घ्राणं च
तत्पादसरोजसौरभश्रीमत्तुलस्यां रसनं तदर्पिते ॥ पादौ हरेः क्षेत्र-
पदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामं च दास्ये, न तु
कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिरिति अम्बरीषोपा-
ख्यानोक्तानां, न तु सामान्यानाम्।मोक्षप्रकरणत्वात्।नापि ज्ञानी-
न्द्रियाणि विवक्षितानि । विरक्तेन्द्रियाणां विषयानाकर्षात् । अत-
स्तृतीयस्कन्धे कुमारप्रसङ्गे, तस्याऽरविन्दनयनस्य पदाऽरविन्द-
किञ्जल्कमिश्रतुलसीमकरन्दवायुः । अन्तर्गतः स्वविवरेण चकार
तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः॥ ते वा अमुष्य वदनासित-
पद्मकोशमुद्वीक्ष्य सुन्दरतराधरकुन्दहासम् । लब्धाशिषः पुनरवेक्ष्य
तदीयमङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः ॥ पुंसां गतिं
मृगयतामिह योगमार्गैर्ध्यानास्पदं बहुमतं नयनाभिरामम् । पौंस्नं

वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन् युतमष्टभोगैरिति ज्ञानिनां भक्तिद्वारा भगवदभिप्रेता मोक्षप्रनाडी साऽत्र विवक्षिता। न तु शुष्कज्ञानप्रनाडीति ज्ञेयम् । तच्चैषां परत्वं मनसा सम्यक्तया भावने भवतीति मनसस्तन्नियामकत्वादर्थेभ्यः परत्वम् । मनसः परत्वं बुद्धौ सारथित्वात् स्पष्टम् । बुद्धेः सकाशात् परो बुद्धिनियामकत्वादात्मा विज्ञानम् । तस्य बुद्धिजन्यत्वेऽपि भगवद्विषयकत्वान्महत्त्वम् । तत एव नियामकत्वं च बोध्यम्। तादृशं विज्ञानं भगवत्कृपयेति महतः परमव्यक्तं ज्ञातुमशक्यत्वादस्फुट भगवत्कृपैव । मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमिति स्मृतेः । प्रसन्नता प्रसादोऽनुग्रह इति यावत्।स च कृपापरपर्यायो धर्मान्तरमेवेत्यग्रे साधनप्रकरणे वक्तव्यम्।अक्षरपरं वाऽव्यक्तपदं बोध्यम्। अव्यक्तोऽक्षर इत्युक्त इति स्मृतेः ।

तन्नियामकत्वं च ब्रह्मभूतस्य भक्तिकथनाद्भक्त्या च पुरुषोत्तमज्ञानमिति परम्परया कारणत्वाद् बोध्यम । तस्मादव्यक्तात् परस्तन्नियामकः पुरुष एव स भगवानिति।एतन्नियमनायोक्तं, सा काष्ठा सा परा गतिरिति।तस्माच्छरीररूपकविन्यस्तानां ग्रहणादत्राऽयमेवाऽर्थो युक्तो, न तु सांख्यपरिकल्पित इति । स्वरूपावस्थानादतिरिक्तमोक्षस्य सांख्यमतेऽभावाच्च। किञ्चाग्रे इममर्थं स्वयं दर्शयति । एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते * दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति । सूक्ष्मयोपनिषदनुसारिण्या बुद्ध्या भगवज्ज्ञाने हि तत्प्राप्तिरिति । चकारात्, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति स्मृतिपरिग्रहः । अतः साधनोपदेशान्न सांख्यमतमिह विवक्षितमिति । ननु नाव्यक्तपदेन कृपाऽक्षरं वा ग्रहीतुं शक्यम् । धर्मिप्रवाहपठितत्वादितिचेन्न । धर्मधर्मिणोरविनाभावेन स्थितत्वादभेदे सूक्ष्मस्याहत्वेन ब्रह्मत्वात् । त-

स्मात् प्रायपाठविरोधाभावादव्यक्तं सूक्ष्मापरपर्यायम् अक्षरं कृपा वेत्युपपन्नम् । तदुक्तं, सूक्ष्मं तु तदर्हत्वादिति तत्त्वसूत्रे । ननु कृपाक्षरयोर्यदि ब्रह्मत्वं तदा भेदनिबन्धनपरत्वानुपपत्ति. । धर्मत्वे तु प्रायपाठविरोध इति चेन्न । अभेदेऽपि तयोर्भगवदधीनत्वाददोष इति।अभेदे एकरूपेण ग्रहणस्य युक्तित्ववदभेदग्रहणे नियम्यनियामकभावस्यैव युक्तित्वात्।नन्वेकत्वे नियम्यनियामकभावाऽसङ्गतिरिति चेन्न । यथा, ब्रह्मविदाप्नोति परमित्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वम्, आनन्दरूपण फलत्वं, तथा कृपाविष्टः साधनमानन्दः फलम्। तथैव गणितानन्दत्वेन पुरुषोत्तमस्य तत्त्वमित्युपपत्तेः । अथवा यथाक्षरविज्ञानस्याक्षरनारूप्येऽप्यक्षराद्भिन्नत्वमक्षराधीनत्वं च तथाऽक्षरमपि ब्रह्मरूप ब्रह्मणः परस्माद्भिन्नं धामत्वात्तदधीनं चेत्युपपत्तिः । तत्राक्षरस्य पुरुषोत्तमभेदः, एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते * ये चाऽप्यक्षरमव्यक्तं तेषां के योगवित्तमा इति प्रश्ने, मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते * श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् । संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ये तु सर्वाणि कर्माणि मयि सन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अत ऊर्ध्वं न संशय इत्यत्र स्फुटः । तथा कृपाब्रह्मणोः प्रकाशाश्रयवद्वा तेजस्त्वादिति सूत्रे भेदाभेदौ सिद्धौ धर्मधर्मिणोर्भेदाभेदसाधनेन । तत्र धर्माः किं ब्रह्मणः सकाशाद्भिन्नाः कार्यरूपा उत ब्रह्मैवेति सन्दिह्य लोके कार्यस्यैव पटरूपा-

देस्तन्तुधर्मत्वात्तन्नित्यतायां प्रमाणाभावात् स्वाभाविकत्वमार्गेण नित्यत्वकल्पनारहितमेवेति पूर्वपक्षे समाधिमाह। प्रकाशेति। वाशब्दः पूर्वपक्षव्यावर्त्तकः । यथा प्रकाशाऽऽश्रयाः सूर्यादयः प्रकाशेना-ऽविनाभूताः । पृथक्स्थित्यभावाद्धर्मस्य। नापि सूर्य एव प्रकाशः। सूर्यस्य प्रकाश इति भिन्नत्वेन प्रतीतेः।प्रकाशः सूर्य इति व्यवहारा-पत्तेश्च । तस्मात्तादृशमेव प्रकाशवस्तूत्पत्तिसिद्धमिति मन्तव्यम् ॥

ननु युक्तिः काऽत्रेतिचेत्।अत्र श्रीपुरुषोत्तमा भाष्यप्रकाशे, यथा अमित्रो न मित्रं, न मित्राऽभावः । भावत्वात् । किन्तु मित्रविरुद्धा सम्पत्।यथा चाविद्या,न विद्याभावः,किन्तु विद्या-विरुद्धं भावरूपमज्ञानम्।तद्वत् प्रकाशतदाश्रययोरभेदोऽपि न भे-दो, न भेदाभावः, किन्तु भेदविरुद्धा सम्पदेव भावरूपा। सा च सम्पद् भावरूपत्वे सति स्वाश्रयाविनाभूतत्वं, तद्विहायावर्त्तमानत्व-मिति यावत् । तथाच भेदेऽपि स्वाश्रयाविनाभूतत्वरूपाभेदस्या-ऽबाधादिति युक्तिरित्याहुः । तत्र तद्विहायावर्त्तमानत्वं नाम तत्स-म्बद्धत्वम् । तेन विद्वन्मण्डनोक्तगन्धवत्स्वाश्रयाधिकदेशवृत्तित्वे-ऽप्यदोषः। प्रदेशविशेषेण सम्बद्धत्वात् । एवञ्च प्रकाशाश्रयवद् ब्रह्मरूपयोर्ब्रह्माक्षरयोर्वा भेदाभेदाविति। तत्र हेतुः । तेजस्त्वादि-ति । अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यादिषु ब्रह्मणः, त-स्य भासा सर्वमिदं विभातीत्यादिश्रुतिषु धर्मस्य च तेजोवाचक-शब्दवाच्यत्वादित्यर्थः । ननु धर्माणां नित्यतामङ्गीकृत्य तादृशभेद-कल्पनमयुक्तमुपपत्त्यभावादिति चेन्न । अविनाशीवारेऽयमात्मा ऽनुच्छित्तिधर्मा इति श्रुतौ धर्माणामपि नित्यत्वश्रावणात् । किञ्च यदि धर्मा अनित्यास्तदा निर्विशेषमेव ब्रह्मेति सिद्ध्यति।तदसम्भ-वि । लक्षणवाक्येनैव धर्मसिद्धेरुपपादितत्वात् । विरुद्धधर्माश्रय-त्वप्रतिपादनावसरे तदसम्भवस्य भाष्यादावुभयव्यपदेशाधिकरणा-

दावुक्तत्वाच्च। यत्तु आनुमानिकसूत्रे अव्यक्तशब्देन रथरूपक-विन्यस्तं शरीरमङ्गीकृत्य तस्य कथमव्यक्तशब्दवत्त्वमित्याशङ्क्य द्वितीयसूत्रे भूतसूक्ष्मस्याव्यक्तशब्दार्हत्वात् तत्कार्यस्य शरीरस्य अव्यक्तशब्देन ग्रहणम्। यथा, गोभिः श्रीणीत मत्सरमित्यत्र गो-शब्देन पयसो ग्रहणमित्युक्त्वा तृतीयसूत्रे तद्भूतसूक्ष्मं न स्वतन्त्रं येन प्रधानकारणवादः प्रसज्ज्येत,किन्तु परमेश्वराधीनम्। तच्चा-ऽऽवश्यकम्। शक्तिरहितस्य कर्तृत्वानुपपत्तेरतस्तदर्थवदित्युक्त्वा अव्यक्तशब्दवाच्यत्वमविद्यायाः केचिद् वदन्ति। तथाच तद्भाष्य-म्। अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दवाच्यनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपबोधरहिताः शेरते संसारिणो जीवाः। तदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्। एतस्मि-न्नु खल्वरे गार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतेः। क्वचिदक्षरश-ब्दोदितं, पर इति श्रुतेः। क्वचिन्मायेति सूचितम्। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति मन्त्रवर्णादिति। तदसङ्गत-म्। कारणग्रहणेनैव सम्भवति गत्यन्तरे कारणवाचिशब्देन कार्य-ग्रहस्यानुचितत्वात्। लक्षणादोषप्रसङ्गात्। द्वाविमौ पुरुषौ लोके इति अक्षरे कारणत्वस्याथ परा यया तदक्षरमधिगम्यते, यत्तद्-ऽद्रश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभु सर्व-गतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः, यथोर्ण-नाभिः सृजते गृह्णते च यथा पृथिव्या ओषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वमित्या-दिश्रुतिभिः। तन्मायाफलरूपेण केवलं निर्विकल्पितम् * वाङ्-मनोऽगोचरं सत्यं द्विधा समभवद् बृहदित्यादिस्मृतिभिश्च निर्द्धार-णात् तद्विहाय मायापदवाच्यशक्तिग्रहणस्यानुचितत्वात्। आ-काशपदवाच्यत्वमपि तत्रैव स्फुटम्। यो वेद निहितं गुहायां परमे

व्योमन् । ऋचोऽक्षरे परमे व्योमन्नित्यादिश्रुतिभ्यः । अक्षरात् परतः पर इत्यत्रापि परत इति विशेषणनैव मायाशक्तिव्यावृत्ति-सिद्ध्याऽक्षरपदेन तस्याऽग्रहणात् । किञ्च, जगद्बीजत्व भगवत एव । बीजं मां सर्वभूतानामिति गीतावाक्यात् । अक्षरस्य कारण-त्वं तु योनित्वात् । मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्य-हमिति । गीतावाक्यात् । नच पुरुषत्वोक्तिविरोधः शङ्कनीयः । त्वं स्त्री त्वं पुमानित्यादिश्रुत्या सर्वरूपत्वात् । नचानधीनत्वं शङ्क्यम् । तद्धामत्वादेव तत्सिद्धेः । इदं प्रसङ्गादुक्तम् । अन्येषामपि सूत्राणां भ्रान्तपरिकल्पितोऽर्थो भाष्यप्रकाशादपनेयः स्थलविशेषे विस्तरभयाऽत्र न लिख्यते । एतेनान्येऽपि प्रकृतिवाचकत्वमव्यक्त-शब्दस्य वदन्तः परास्ताः । धामत्वं कथमितिचेत् । शृणु । छन्दोग्ये पठ्यते । अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यमिति । अथ किं तत्र वर्त्तते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्यमिति प्रश्ने, यावान् वा अयमाकाशस्तावानेषो-ऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादिनाऽग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राण्युक्त्वा यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमित्युक्त्वा ब्रह्मपुरे जीर्णे ध्वस्ते वा तदाश्रितं किम् अवशिष्यते ? इति प्रश्ने, नाऽस्य जरयैतज्जीर्यति न वधेनास्य हन्यते, एतत् सत्यं ब्रह्मपुरस्तस्मिन् कामाः समाहिताः एष आत्मा अपहतपाप्मा इत्यादि । तत्र ब्रह्मपुरशब्देनाक्षरमुच्य-ते । उत्तरश्रुतिस्मृतिवाक्यहेतुभ्यः । न तु शरीरम् । सत्यत्वोक्ति-विरुद्धत्वात् । नच, यावान् वेति परिमाणोक्तिविरोधः शङ्कनीयः। उपलक्षणविधयोक्तत्वात् । अन्यथानुपपत्तेर्बलिष्ठत्वात् । नच सर्वे कामाः समाहिता इत्यस्य विरोधः शङ्कनीयः । तत्र भक्तकामो-

क्तेः । एतन्निरूपितमाचार्यैरानन्दमयाधिकरणे, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुतिव्याख्याने फलप्रकरणे स्फुटीभविष्यति च । अत एव बृहदारण्यके, ते ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्द इति गणितानन्दाऽक्षरस्य लोकविशेषणमुक्तम् । तथा तैत्तिरीयोपनिषदि श्रूयते । यस्मिन्निदं सं च विचैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः ॥ तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् ॥ येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा इति । अवयन्तीत्येतदन्वयि । अत्र प्रजापदेन व्यापिवैकुण्ठात्मकं लोकं वक्तीत्यक्षरं शब्दाज्ज्ञायते । अत एव छान्दोग्ये, महिम्नि प्रतिष्ठितः । तैत्तिरीये च ब्रह्मपुच्छं प्रतिष्ठेत्युच्यते । अधिकरणभङ्गस्य भाष्य एवाचार्यैर्दूषितत्वात् । तथा तेजोबिन्दूपनिषदि । परं गुह्यमिदं स्थानम् अव्यक्तं ब्रह्म निराश्रयं व्योमरूपं कालसूक्ष्मं विष्णोस्तत्परमं पदम् । त्र्यम्बकं त्रिगुणस्थानं त्रिधातुं रूपवर्जितम् ॥ निश्चलं निर्विकल्पं च निराधारं निराश्रयम् ॥ उपाधिरहितस्थानं वाङ्मनोऽतीतगोचरमित्यादि पठ्यते । नात्र विष्णोरिति पञ्चम्यन्तामिति शङ्क्यम् । अनेकश्रुतिविरोधात् । आत्मबोधोपनिषदि, ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठ भगवल्लोकं गमिष्यति इत्युक्त्वा यदिदमित्यादिनोपासनमुक्त्वाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान् कामानास्थायाऽमृतः समभवत् समभवत् । यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हित तस्मिन्मां धेहि पवमानाऽजस्रलोके अक्षिते अमृते लोके अक्षिते अमृतत्वं गच्छसमृतत्वं गच्छसोम इति नियता श्रूयते । कठवल्ल्यां, यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ॥ स तत्पदमवाप्नोति यस्माद् भूयो न जायते ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति । मुण्डकेऽपि, सर्वेदैतत्परमं ब्रह्म धाम यत्र विश्वं हितं भाति शुभ्रम् ॥ उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीरा इति । एतदुपबृंहितं गीतायाम्, अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥ यं प्राप्य न निवर्त्तन्ते तद्धाम परमं ममेति । नच धाम्ना स्वेनेत्यत्रेव धामपदं स्वरूपवाचकमिति वाच्यम् । पूर्वापरविरोधात् । तत्र पुरुषोत्तमाधिक्यस्यैव सिद्धेः । तथा दशमे, इति सञ्चिन्त्य भगवान् महाकारुणिको हरिः ॥ दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिता इति । तथा द्वितीये । तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्परम् ॥ व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ प्रवर्त्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता इत्यादिना मायादिनिषेधपूर्वकं नित्यत्वमेव श्राव्यते । अत एव, नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥ निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नम इति शुकोक्तिः । अत्र स्वधामनि ब्रह्मणि रंस्यते इति श्रीधरी । तत्र अक्षरे इति शेषः । अन्यथा मुख्यधात्वर्थबाधापत्तेः । अत एव तृतीयस्कन्धे वैकुण्ठवर्णनानन्तरं, स्व एव धामन् रममाणमीश्वरमित्युक्तम् । किञ्च, बृहद्वामनपुराणे उत्तरे खिले च गीयते— श्रुतय ऊचुः ॥ नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ॥ सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥ ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् । वाङ्मनोगोचरातीतं ततो न ज्ञायते तु यत् ॥ आनन्दमात्रमिति यद्वदन्तीह

पुराविदः । तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ श्रुत्वै-तद् दर्शयामास स्वं लोकं प्रकृतेः परम् । केवलाऽनुभवानन्दमात्र-मक्षरमध्ययम् ॥ यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः । मनोरमनि-कुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुत इत्याद्युक्त्वा, दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरमिति।नच वैकुण्ठगोकुलयोर्भेदः शङ्कनीयः । प्राकृतप्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा * शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥ ब्रह्मा-ऽऽनन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः।निर्गुणो नाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥ अक्षरं ब्रह्म परम वेदाना स्थानमुत्तमम् । तल्लोक-वासिभिस्तत्र स्तुतो वेदैः परात् पर इत्यादितत्पूर्ववाक्येषु वैकुण्ठ-स्थितत्वकथनात् तस्यैव च लोकदर्शकत्वात् । अत एव, भूमावु-त्तारितं सर्वं वैकुण्ठस्वर्गवासिनमिति श्रुतिः । ननु वैकुण्ठस्य ब्रह्मत्वसम्भवेऽपि कथं गोकुलस्य ब्रह्मत्वं, परिच्छिन्नत्वादिधर्मदर्श-नादितिचेत् ॥ अत्र प्रभुचरणैर्विद्वन्मण्डने एवं समाहितम्। तथाहि ऋग्वेदस्थां, ता वां वास्तून्युष्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः * अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरीति श्रुतिं, तथा तैत्तिरीयस्थां, ते ते धामान्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः * अत्राह तदुरुगायस्य विष्णोः परमं पदमव-भातिभूरेरिति श्रुतिं चोपन्यस्य श्रीगोकुलपरत्वेन व्याख्याते । तत्र सुवर्णसूत्रे, निरुक्ते सूर्यपरत्वेन व्याख्यानात् कथमिहैवमुच्यत इत्याशङ्क्य प्रकरणमनुरुद्ध्य तथा, सर्वे वेदा यत्पदमामनन्ति वेदै-श्च सर्वैरहमेव वेद्य इति श्रुतिस्मृती चानुरुद्ध्य, अदो यद्दारु प्लवते इत्यत्र लक्ष्मीप्रकाशकमन्त्रस्य पुरुषोत्तमक्षेत्रमहात्म्ये व्यासपादै-र्वेदभाष्ये विद्यारण्येन च श्रीजगन्नाथपरतया व्याख्यानादेतस्याः सरणेर्दर्शितत्वेन निरुक्तविरोधस्यादूषकत्वाच्चैवं व्याख्याते इत्यु-

क्त्वा, वस्तुतस्तु रश्मयो गाव उच्यन्त इति प्रतिज्ञाय, ता वां वास्तूनीति श्रुतिर्व्याख्याता, न तु सूर्यनिरूपणं प्रतिज्ञाय । व्याख्याने च शिरसो निर्गतमित्यपि शृङ्गपदनिरुक्तिः। तेनाऽर्थान्तरोक्तावपि न निरोध इति चतुर्था समाहितम्। द्वे शीर्षे प्रायणीयोदयनीये । सप्तहस्तासः सप्तछन्दांसि त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महो देव इत्येष हि महान् देवो यज्ञो मर्त्यान् आविवेशेत्येष हि मनुष्यानाविवेशेति। यद्वा यस्तस्योत्तरा भूयसे निर्वचनायेति श्रुतिर्व्याख्याता अतोऽपि निरुक्तव्याख्याने न दोषः । अग्रे च विद्वन्मण्डने । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे इन्द्रस्य युज्यः सखा तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः, दिवीव चक्षुराततमिति मन्त्रद्वयमुक्त्वा मन्त्रं व्याख्याय, दिवीव चक्षुराततमित्यस्य व्याख्याने दिवि स्वर्गे यथा आसमन्तात् ततं व्याप्तम् । यन्न दुःखेनेति वाक्यात् सुखरूपं पदाऽर्थं तत्रस्थानामेव चक्षुः पश्यति, नान्येषामेवं गोकुलस्वरूपं सूरय एव पश्यन्ति नान्ये इति । तथाच परिच्छिन्नत्वादिदर्शनं, तेषां चक्षुषोऽयोग्यत्वात्।अथवा पूर्वमित एव स्वर्गस्य पदार्थादर्शनेऽपि योगधारणया दूरस्थार्थग्रहणसिद्धिसम्पत्तौ योगिनश्चक्षुराततं सर्वतो व्याप्तं सर्वग्रहणसमर्थं सत् इत एव स्वर्गस्थपदार्थान् पश्यति। तद्वत् साधनसम्पन्नचक्षुरेव गोकुलं पश्यति, नान्यत्।अथवा पूर्वोक्तपरमपदस्य लोकरूपत्वेनेतरलोकन्यायेन तद्दुःखस्यापि सम्भवात् कथमस्य ब्रह्मरूपत्वमित्याशङ्क्य दिवीवेति। यथान्यलोके दुःखसम्भिन्नसुखरूपत्वेऽपि न स्वर्गे तथात्वं तथा गोकुलेऽपि आनन्दरूपत्वम्। ननु उद्भूतरूपस्य सत्त्वात् कथमेतस्य सूरिदर्शनविषयत्वं, कथं वा परिच्छिन्नत्वमित्याशङ्क्य चक्षुरिवेति । तथा चक्षुरेव

रूपं गृह्णाति, न श्रोत्रादिकम् । इन्द्रियत्वाविशेषेऽपि तस्यैव तत्र सामर्थ्यात् । वस्तुन एव तथात्वात् तथा प्रकृतेऽपि।यथाच दोषाऽसहकृतमेव चक्षुर्वस्तुतत्त्वं गृह्णाति भ्रमिकामलादिदोषासहकृतं तु महीभ्रमिशङ्खपीतिमादिकं तथा अविद्यारहिता एव सूरयो गोकुलस्वरूपं पश्यन्ति नान्य इति । एतेन तत्रस्थवृक्षस्थलादीनां प्रश्नाऽन्यथाभावदर्शनादिषु उपपत्तिरुक्ता भवति। यद्वा चक्षुरिति द्वितीयान्तं पदविशेषणम् । यथा चक्षुरिन्द्रियं स्वयमतीन्द्रियमेव गोलके स्थितं तत्सर्वं पश्यति गोलकेऽपि चक्षुःपदवाच्यतां धत्त योगिप्रत्यक्षविषयश्च भवति । तथा गोकुलादिकं स्वयम् अतीन्द्रियमेव साधारणदृश्येत्र स्वव्यपदेशं प्रापयति, तत्रैव स्थितं भवति, सूरित्वे च दृश्यं भवति।तस्मादेतत् साधारणजनदृश्यस्याधिष्ठानपक्षे तस्यैव कारणदोषादन्यथा भानपक्षेऽपि तत्र स्थितानां लोकाना कामक्रोधादिकमनुपपन्नम् ।तस्य परमानन्दरूपत्वाद् गुणातीतत्वाच्चानच करणदोषेणैव द्रष्टुस्तत्स्थितलोकदुःखादिदर्शनमिति वाच्यम्।करणदोषस्यापि तत्र वक्तुमशक्यत्वात्।तत्रैवान्योन्यं तथा दर्शनादिति। तत्राह आततं चक्षुरिवेति।यथा देवदत्तचक्षुरिन्द्रियं विष्णुमित्रशरीरे आसमन्ताद् व्याप्तमपि तैजसं सदप्यनुद्भूतरूपत्वेन नान्धंतमसि प्रकाशयति तापयतिवा तथा भगवदिच्छयैव प्रकटाननुभावत्वेन तस्य पक्षद्वयेऽपि, क्षुधार्ता इदमब्रुवन् त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल इत्याद्याधुनिकतज्जनदोषदर्शनं युज्यते इति लीलैव प्रयोजनमिति । अस्मिन् पक्षे दृष्टान्तत्रयं बोध्यम् । तथेच्छा तु सर्वमुक्त्यभावायाऽऽसुरव्यामोहाय च। तदुक्तं, तथाप्यासुरमोहार्थं परेषां च क्वचित् क्वचित् * दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः ॥ क्व व्रणादि क्वचाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिरिति । नन्विमानि वाक्यानि स्वरूप-

पराणि, न लोकपराणीति चेत् । सत्यम् । तथापि भेदाभेदस्य पूर्वमुपपादितत्वाददोष इति ॥

यत्तु परविद्यान्तर्गतऋग्वेदवाक्यबाध इति कश्चित् । स प्रतिवक्तव्यः । अत एव नृसिंहोत्तरतापनीये ब्रह्मैवेदं सर्वं, सच्चिदानन्दरूपं सच्चिदानन्दरूपमिदं सर्वमिति । किञ्च, वाराहे चातुर्मास्यमहात्म्ये श्रूयते क्षीरसमुद्रं प्रकृत्य, तन्मध्ये मम लोकस्य परितो वलयाकृतिः * योजनाना तु लक्षाणि विंशतिस्तस्य विस्तृतिः॥ श्वेतद्वीप इति ख्यातः प्रलयेऽपि न नश्यतीत्युक्त्वा, तत्र श्रीभूदुर्गात्मभागत्रयं तत्परिमाणं संस्थां चोक्त्वा,तत्र भूदुर्गाभागयोस्तत्स्थानां चावान्तरप्रलये नाशाभावं चोक्त्वा, श्रीभागे संस्थिता ये तु न तेषां प्रलये भयम् * शाश्वतः स तु मे लोको न नश्येद् ब्रह्मणो लये ॥ मुक्ता एव तु मां तत्र वीक्षन्ते सर्वदैवतम् । कल्पान्तप्रभवो वह्निर्जलं वा भूमिदुर्गयोः ॥ भागौ न स्पृशते तौ हि चक्रेण परिरक्षितौ । तत्रस्थास्तु जनाः सर्वे मोदन्ते सर्वदैव तु इत्यादि । तेनापि नित्यत्वमेव सिद्ध्यतीत्यलमुक्त्या । यदुक्तम् एकया भक्तिप्रतिपादिकया श्रुत्या नानेकेषां ज्ञानप्रतिपादकानां बाधो युक्त इति । तदपि प्रमाणप्रकरणे भक्तेः सर्वश्रुतिगीताभागवतादिसकलपुराणतात्पर्यविषयत्वप्रतिपादनाद् दत्तोत्तरम् । यदप्यऽविद्यानिवृत्तिर्मोक्ष इत्युक्तं तदपि फलप्रकरणे दूषणीयमिति न किञ्चिदेतत् । प्रकृतमनुसरामः । एवञ्च ताद्दशाक्षरविषयकाणां ज्ञानानां यन्मोक्षसाधनेषु अवरोधः प्रवेशनं,गणनेति यावत् स सामान्यतदभावाभ्यां हेतुभ्यां तत्र, सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता * स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदमित्येकादशस्थवाक्यात् सत्सङ्गस्य पुरुषोत्तमसम्बन्धिसम्बन्धेन साधनत्वमिवाक्षरज्ञानस्यापि पुरुषोत्तमसम्बन्धिभक्तिसम्बन्धेन साधनत्वात्

सामान्यं, तद्भावो ब्रह्मभावः । तथाच मर्यादामार्गीणां पुरुषोत्तम-प्राप्तौ स्वरूपयोग्यतासम्पादकत्वेन प्रवेश इति फलितम् । ननु द्वितीयहेतोः किं प्रयोजनमितिचेन्न । सामान्यादित्युक्तेः सत्सङ्ग-वत् कारणतासम्भावना स्यात्तद्वारणाय द्वितीयहेतोरावश्यकत्वात् । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः * न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेत्यत्र प्रायः—पदेन तथाऽवसायात् । यद्वा सामान्यं भगवद्विभूतित्वम् । तद्भावस्तस्य पुरुषोत्तमस्य भावः सत्ता पूर्वोक्तरीत्या भगवत्स्थितिरिति यावत् । ताभ्यामिति । नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषाञ्चिद् ब्रह्मवेद ब्रह्मैव भवतीत्यवधारणात् तत्रैव लयः । केषाचिद् ब्रह्म-विदाप्नोति परमिति श्रुत्युक्तपरमाप्तिसाधनीभूतभक्तिभाव इति साधनवैजात्याभावेऽपि फलवैजात्ये को हेतुरित्याकाङ्क्षायां दृष्टान्त-मुखेन हेतुमाह । औपसदवदिति । उपसद इदमौपसदं तद्वत् । उपसदाख्ये कर्मणि आतिथ्यायां ध्रौव्यां स्रुचि चतुरवत्त चमसे वा पञ्चावत्तं यदाज्यं तत् तानूनप्त्रमित्युच्यते । अनाधृष्टमस्यनाधृ-ष्यमिति मन्त्रेण षोडशर्त्विजः, अनु मे दीक्षामितिमन्त्रेण यजमान-श्च समवस्पृशन्ति । तत् तानूनप्त्राख्यं कर्म औपसदम् ।

तत्र विशेषः श्रुतौ कल्पे चोच्यते । तदत्रमृशन् यमृत्विजं कामयेताऽयं यज्ञयशसमृच्छेदिति तं पृथगवमर्शयेदिति । अत्र सर्वेषामृत्विजां तानून-प्त्रित्वेसमानेऽपि यस्मिन् यजमानस्य स्नेहातिशयेन यज्ञयशोदानेच्छा तत्रैवं कृतिर्न सर्वेषु तद्वत् । तथाच तत्र यथर्त्विजामविशिष्टत्वेऽपि यजमानेच्छया फलवैजात्यं तथात्र न भगवदिच्छया फलवैजात्यमि-ति । न हि तत्राविशिष्टेषु कथमिव कृतिरिति पर्यनुयोगः सम्भवति । एवमत्रापि न तत्सम्भावनेत्यपि बोध्यम् । ननु श्रवणादिवदक्षरस्यापि पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्वमस्त्वितिचेत् तत्राह । तदुक्त-

मिति। भगवद्गीतास्विति शेषः। अयमर्थः। यदक्षरं वेदविदो वदन्तीत्यादिना, स याति परमां गतिमित्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा अनन्यचेता इत्यादिना स्वप्राप्त्युपायं स्वस्य तद्वैलक्षण्यं चोक्त्वा स्वस्य भक्त्यैकलभ्यत्वं स्वस्वरूपं च वक्तुं पूर्वं क्षराक्षरयोः स्वरूपं कथयन्, यं प्राप्य न निवर्त्तन्ते तद्धाम परमं ममेत्यनेनाक्षरस्य ज्ञानिमुक्तिस्थानत्वं स्वधामत्वं चोक्त्वा, पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया * यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततमिति भक्त्यैकलभ्यत्वं, परत्वं, सर्वभूताधारत्वं, सर्वविस्तारकत्वं च स्वस्योक्तवान्। अतः पुरुषोत्तमसम्बन्धित्वमात्रं न तत्प्राप्तिहेतुतावच्छेदकं किन्तु तत्सम्बन्धिभक्तित्वं, तच्चाक्षरे नास्तीति नाक्षरस्य तथात्वमिति। नैष दोषः। तैत्तिरीये, सैषानन्दस्य मीमांसा भवति। युवा स्यात् साधुयुवाध्यापकः। आशिष्ठो द्रढिष्ठो बलिष्ठः, यस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चरलोकलोकानामानन्दः—स एकः कर्मदेवानां देवानामानन्दः। ये कर्मदेवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानामानन्दाः स एको देवानामानन्दः श्रोत्रिय—। ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रिय—। ते ये शतमिन्द्रस्यानन्दाः श्रोत्रिय—। ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्येत्यत्र ब्रह्मानन्दस्य सावधिकत्वमुक्त्वाग्रे पठ्यते। स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवंवित् अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रामति। एवं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामतीत्यनेन जीवस्यानन्दमयेऽनूपसंक्रमणमुक्त्वा त-

दप्येष श्लोको भवतीति तत्पदेनानन्दमयं लक्ष्यीकृत्य, यतो वाचो निवर्त्तन्ते इति श्रुत्या तदानन्दस्य वाङ्मनसागोचरत्वबोधनात् । तथाच स्नेहस्य मनःकल्पनरूपा या पूर्णावस्था सा भक्तिरिति निष्कर्षः । ननु नैवं वक्तुं युक्तम् । स्नेहजमनःकल्पनापेक्षया मनोनिवेशस्यैव लघुत्वेन भक्तित्वात् । तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेद् * इति सामान्यलक्षणात् । अत एव, कामाद् गोप्यो भयात् कंसो द्वेषाच्चैद्यादयो नृपाः * सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो इत्यत्र भक्त्यतिरिक्तत्वेन स्नेहस्योक्तिर्युज्यते । तस्मात् स्नेहजमनःकल्पनमविहिता भक्तिरिति चेन्नैवम् । छान्दोग्ये, यो वै भूमा तत् सुखमित्युपक्रम्य, स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स्वराड् भवतीति पठ्यते । मैत्रेयीब्राह्मणे च, येनाहं नाऽमृता स्यां किमहं तेन कुर्यामित्यादिनोपक्रम्य अमृतत्वार्थमात्मावारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यात्मदर्शनं तत्साधनं चोपदेष्टुं, न वारे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवतीत्यादिनात्मनि निरुपधिप्रीतिविषयत्वाभ्यासेन तत्र प्रियत्वं परिचायितम् । उपसंहारे चैतावदरे खल्वऽमृतत्वमित्यनेन तद्विषयकज्ञानस्याऽमृतत्वमुच्यते । तथा, सा परानुरक्तिरीश्वरे इति सूत्रयन् भक्तिसूत्रकृत् तत्संस्थस्याऽमृतत्वोपदेशादिति सूत्रे स्नेहस्यैवाऽमृतत्वं फलं वदन्, अग्रे ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र श्रुतौ संस्थापदेन ज्ञानमेवोच्यते, न तु राग इत्याशङ्क्य, ज्ञानमिति चेत् तद्विषतो विज्ञानस्य तदसंस्थितेरिति सूत्रेण भक्तिरेव संस्थेति व्यवस्थापितवान् । सूत्रार्थस्तु, पूर्वोक्तमाशङ्क्य संस्थाशब्देन न ज्ञानं ग्रहीतुं शक्यम् । द्विषतस्तद्गतज्ञानवतोऽपि तत्संस्थव्यवहाराभावात् । न हि राजद्वेषिणो हि

भूपा राजसंस्था इत्युच्यन्ते। किन्तु तदनुरक्ता भृत्यादय एवेति। तस्मात् संस्था भक्तिरेवेति। किञ्च, भगवान् ब्रह्मकात्स्न्र्येन त्रिरन्वीक्ष्य मनीषया * तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेदिति। रतिर्देवादिविषया भाव इत्यभिधीयते। पुनश्च भूयाद् भगवत्यनन्ते रतिरित्यादिस्मृतिषु च स्नेह एवोच्यते रतिपदेन। तस्मिन् स्निग्धः, आसक्तो, रत इति पर्यायतादर्शनात्। प्रियपदेनापि स्नेहः। प्रेमा ना प्रियता हार्दं प्रेम स्नेह इति कोषात्। तथा मनोनिवेशनस्यैव भक्तित्वे उक्तश्रुतिसूत्रविरोधो दुर्वारः। किञ्च, मनोनिवेशनस्य चाञ्चल्याभावयुक्तमनसस्तत्परत्वरूपत्वे, यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् *तथा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि॥ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्। न तथा भक्तियोगेन इति मे निश्चिता मतिरित्यादौ भक्तेःसमन्वयभक्तेः करणतायाश्चोक्तत्वात्मनोनिवेशनभक्त्योर्भेद एवास्थेयः। नच गौरवमिति वाच्यम्। व्यसनात्मकस्नेहस्य मनोगतिरविच्छिन्नेति वाक्योक्तस्यैव तत्त्वेनाङ्गीकारात्। निश्चलमनोमात्रस्य भक्तित्वाभावेन, यथा ते निश्चलमित्यादिवाक्याविरोधः॥

नच तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति वाक्यविरोध इति वाच्यम्। तस्य मुक्तिसाधनत्वेन मनोनिवेशस्य कथनेन भक्तिलक्षकत्वाभावात्। अथावशिष्यते स्नेहभक्तिभेदकथनविरोध इति। तत्राप्युच्यते। विहिताविहितभेदेन स्नेहस्य द्वैविध्यात्। तथाहि। युष्मच्छब्दवाच्ययुधिष्ठिरादीनां सम्बन्धस्नेहस्याविहितभक्तिरूपत्वेन ततो नारदादिकृतविहितस्नेहस्य भक्तित्वौचित्यमिति। तदुक्तमाचार्यैः, युवां मां पुत्रभावेन ब्रह्मभावेन चाऽसकृत् * चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं परामित्यत्र सुबोधिन्याम्। पुत्रभावेन अविहितस्नेहेनेति। तथाच पुत्रत्वादि-

प्रकारकज्ञानवतो भगवति स्नेहः अविहिता भक्तिः । ब्रह्मत्व-
प्रकारकज्ञानवतो भगवति स्नेहो विहिता भक्तिरिति बोध्यम् ॥
अथवा, पूर्वोक्तलक्षणभक्तौ इतरसाधनसहकृतभगवदनुग्रहप्राप्यत्वे
मर्यादात्वव्यवहारः । इतरसाधनासहकृतभगवदनुग्रहप्राप्यत्वे पुष्टि-
त्वव्यवहार इति व्यवहारमात्रप्रयोजकत्वादनयोर्न लक्षणत्वमित्यव-
धेयम् । वस्तुतस्तु पूर्वोक्तं सामान्यलक्षणं विशेषलक्षणं चेदमित्य-
दोषः । अनुग्रहस्वरूपं सूत्रार्थश्च साधनप्रकरणे वक्तव्यः । निर्गुणा
भक्तिरेकधेति श्रीधरस्वामिनः । यथा साधनप्रकारेण वस्तु-
व्यापिनवधाभक्तिः पुरुषोत्तमप्रापकत्वाद् अत्रैव प्रोच्यते । तत्र मैत्रे-
यीब्राह्मणे, आत्मावारे द्रष्टव्य इति दर्शनमनूद्य श्रोतव्यो मन्तव्यो
निदिध्यासितव्य इति श्रवणादिभक्तिरूपया भक्त्या, मामभिजाना-
तीति स्मृत्या पुरुषोत्तमज्ञानस्य भक्तिलभ्यत्वात् । तत्र श्रवणं नाम-
भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्द्धारः । वेदा-
न्तानां ब्रह्मणि तात्पर्यावधारणानुकूला मानसी क्रिया श्रवणमिति
कश्चित् । तन्न । गौरवात् । वेदान्तपदव्युदस्तसूत्रवेदपुराणेतिहास-
श्रवणेऽव्याप्तेश्च । युक्तिभिश्चिन्तनं मननम् । तच्च स्मरणमेव ।
कश्चित्तु मननं शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निरा-
करणानुकूलाकस्मिकज्ञानजनको व्यापार इत्याह । तदपि न ।
गौरवात् । निरन्तरं दीर्घकालमनुचिन्तनं निदिध्यासनम् । मनना-
नन्तरभावित्वादन्विति । कश्चित्तु अनादिदुर्वासनया विषयाकृष्य-
माणबाह्यचित्तस्य विषयेभ्य उपकृष्यात्मविषयकस्थैर्यानुकूलो
व्यापारो निदिध्यासनमित्याह । तदपि तत एव निरसनीयम् ॥

उपलक्षणं चैतन्नवधाभक्तेः । श्रवणं कीर्त्तनं विष्णोः स्मरणं
पादसेवनम् ॥ अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमिति वा-
क्यैकवाक्यतायै । तथा, तस्माद्भारत सर्वात्मा भगवान् हरिरीश्व-

रः * श्रोतव्यः कीर्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयमित्यत्राप्युपलक्षणविधया नवानां ग्रहणं बोध्यम् । तदुक्तमाचार्यैः । भागवतशास्त्रस्य भक्तिफलकत्वाद् वक्तुः शुकस्य ब्रह्मज्ञत्वाच्च न धर्मरूपं श्रवणादिकं, किन्तु भक्तिरूपम् । तथाच नवविधा भक्तिर्वक्तव्या, कुतस्त्रयाणामुक्तिरित्याशङ्कायां नवविधभक्तेर्वक्तव्यत्वेऽपि प्रेमानन्तरभावित्वादन्येषां, त्रयमेवोक्तम् । त्रिभिः स्नेहे जातेऽन्येषां कर्त्तव्यतानुक्तसिद्धैवेति । एतेनात्मावाऽरे द्रष्टव्य इति श्रुतावप्यनुक्तसिद्धानामितरेषामुपलक्षणविधया ग्रहणं सूचितम् । इयान् विशेषः । मनननिदिध्यासनयोर्द्वितीयस्त्रोधिन्यां श्रवणाङ्गत्वेन प्रतिपादनाच्छ्रुतौ एकविधानम् । स्मृतौ तु त्रयं विहितमिति । तथा श्रुतौ द्रष्टव्य इत्यनेन ज्ञानमुक्तम् । तदपि प्रेम्णा कृतैस्त्रिभिः स्मृत्युक्तैः श्रवणादिभिः सम्भवति । केचित्तु निदिध्यासनं मुख्यं कारणं, तदङ्गं मननं, मननाङ्गं श्रवणमाहुः । अपरेतु, श्रवणं प्रधानं मनननिदिध्यासनयोः श्रवणात् पराचीनयोरपि श्रवणफलब्रह्मदर्शननिर्वर्तकतया आरादुपकारकाङ्गत्वमाहुः । तत्र नाद्यः । भक्तीतराग्राह्यत्वात् पुरुषोत्तमस्य । द्वितीयस्तु नातिविरोधीति न दूष्यते । तेन त्रयाणां श्रुतिस्मृतिवाक्यानामेकवाक्यता सिद्धा । एवमन्यत्राऽप्यूह्यम् । ननु आत्मा श्रोतव्य इति कोऽर्थः । तद्वाचकशब्दानां श्रोत्रेण ग्रहणमुत तेषामर्थो ज्ञातव्यः, अभिप्रायो वातत्रापि सर्वेषां शब्दानां ज्ञातव्यः, केषाञ्चिदेव वा । नाद्यः।निर्विषयत्वप्रसङ्गात्। तथाहि । ग्रहणस्य प्रमाणवस्तुपरतन्त्रत्वेन श्रोत्रेन्द्रियवतो यतःकुतश्चिच्छब्दे उच्चारिते तद्ग्रहणं भविष्यति, एवं गृहीतसङ्केतस्य तु पुनः अर्थज्ञानमपि भविष्यति, न तु तत्सम्पादने फलोपयोग इति। अदृष्टवशाद् यत्नं विनापि सर्वेषां तत्संभवात् । अथ सर्वदा कर्तव्यम् । अशक्त्याऽसम्भवाज्जीवनानुपपत्तिश्च । अन्यच्च, भगवद्वाचक-

पदवाक्यानाम् एकेनोपस्थापयितुम् अशक्यत्वाद् यत्किञ्चित्पदवाक्यानां सर्वेषां सत्त्वादवक्तव्यम् ॥

ननूक्तं— भगवद्वाचकपदवाक्यानां भगवति शक्तितात्पर्यनिर्धारः श्रवणमिति। तथैव कीर्त्तनं स्मरणं चेति चेन्न। सर्वेषां पदवाक्यानामनुपपत्तितस्तन्निर्द्धारस्याशक्यवचनत्वात् । यत्किञ्चित्पदवाक्यमात्रस्य शक्तितात्पर्यनिर्द्धारः सार्वजनीन इति नोपदेशो युक्त इति चेत् । नैष दोषः । दशविधलीलायुतभगवतः श्रवणकर्त्तव्यत्वेनोपदेशात् । अन्यथा विधेर्वैयर्थ्यप्रसङ्गात् । ताश्च, अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः * मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रय इति वाक्योक्ताः । एतेषां लक्षणं भागवतार्थनिबन्धे स्फुटम् । गुणानामानन्त्येऽपि दशलीलासु प्रवेशो द्वितीयदशमाध्यायसुबोधिन्यां प्रतिपादितः। लीलाप्रवेशोऽप्यानन्त्यमपि तत्रैव प्रतिपादितम् । तदुक्तमाचार्यैः । श्रोतव्यविषयत्वेन लीलादशविधा यतः * उक्तैव वासुदेवस्य तदर्थमपरा कृतिः ॥ शक्तितात्पर्यनिर्द्धारः सामान्येन पदादिगः । क्रियते स्कन्ध एवात्र तेन नात्रोक्तदूषणमिति । तथाच दशलीलायुतस्य यथाकथञ्चिच्छ्रवणासम्भवान्न विधिवैयर्थ्यमिति, दशलीलासु सकलगुणप्रवेशात् सकलगुणविशिष्टश्च श्रोतव्य इति च सिद्धम् । अथात्र त्रयं न विधातव्यम् । एकेनैव प्रेमद्वारा फलसिद्धिः । नच मिलितानां त्रयाणां कारणतेति वाच्यम् । श्रवणस्य सर्वत्रावश्यकत्वादितिचेन्नैवम् । त्रयाणामन्योन्यनिर्वाहकत्वेन विधानात् । तथाहि । कीर्त्तनाविधाने श्रवणमेव न निर्वहेत् । नचाध्ययनविधिवदेकविधानेनान्याक्षेपसम्भव इति वाच्यम् । अध्ययनस्य संसारिकर्त्तव्यत्वेन विध्यभावेऽपि वृत्तित्वेन प्राप्तत्वात् । नचैवं प्रकृते सम्भवति । श्रवणेन कृतार्थस्य कीर्त्तने प्रवृत्त्यनुपपत्तेः । ननु तर्हि कीर्त्तनमेव विधीयतां

श्रवणस्य त्वर्थादेव सिद्धिरितिचेन्न । परीक्षिति तदभावात् । फलवैलक्षण्याभावाच्च । तेनातिनिरपेक्षाणां शुकादीनां कीर्त्तनेनैव तत्सम्भवादितिचेन्न । सकृत्कृतकीर्त्तनस्य विस्मरणमपि भवेदिति कीर्त्तनशेषत्वेन स्मरणप्राप्त्यसम्भवात् । विहिते तु स्मरणे श्रवणकीर्तने सदा भवतः । दोषान्तराप्रवेशश्चेति तद्विधानस्यावश्यकत्वात् । तत्र त्रयाणामावृत्तिः कार्या । आवृत्तिरसकृदुपदेशादिति सूत्रप्रथमवर्णकभाष्ये स्फुटमिदम् । सूत्रार्थस्तु श्रवणाद्यावृत्तिः कर्तव्या ? न वेति संशये, सकृदुच्चारणेनैव शास्त्रार्थसम्पत्तेः सकृत् कर्त्तव्यं श्रवणादिकमिति पूर्वपक्षे, आवृत्तिः कर्त्तव्याः । कुतः । असकृदुपदेशात् । छान्दोग्ये श्वेतकेतूपाख्याने, ऐतदात्म्यमिदं सर्वं, तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति वाक्येन जडजीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान् । तथा सकृदुपदेशेनैवैतदर्थसिद्धिः स्यात् तदैकमेवार्थमेकस्मा एकदैवासकृन्नोपदिशेत्।प्रयोजनाऽभावात् । तस्मादावृत्तिः श्रवणादीनां कर्त्तव्येति फलितम् ॥

प्रकृतमनुसरामः॥ कीर्त्तनं नाम पदवाक्यानां भगवति शक्तितात्पर्यनिर्द्धारपूर्वकमुच्चारणम् । एवमन्यत्रापि बोध्यम् । अत एव नवरत्ने आचार्यवर्याः । लोके स्वास्थ्यं तथा वेदे हरिस्तु न करिष्यति * पुष्टिमार्गस्थितो यस्मात् साक्षिणो भवताऽखिला इत्युक्तवन्तः । तथैतस्य टीकायां प्रभुचरणाः । अङ्गीकारे लक्षणान्तरमप्याहुः । लोक इति । कदाचित् प्रवाहवशाल्लौकिके वाणिज्यादौ वैदिके आश्रमधर्मादावास्थितौ तत्र विघ्न एव भवति, न तु तत्फलमित्यर्थः। तत्र हेतुः। पुष्टीति। तद्विना स्वबलेनैव सर्वकर्त्तायत इति भावः । पुष्टिमार्गाङ्गीकारे मर्यादां न सहत इति ज्ञेयमित्युक्तवन्त इति न शङ्कालेशः । तथैव स्वरूपाचिन्तनं स्मरणम् । पादसेवनं परिचर्या । स्पर्शं वा । अर्चनं पूजा । वन्दनं कायवाङ्-

मनोभिः सह्रीभावः । दास्यं कर्मार्पणम् । सख्यं तद्विश्वासादि । आत्मनिवेदनं देहादिसमर्पणम् । यद्यपि,भक्त्या संजातया भक्त्येति वाक्यात् प्रेमसाधकत्वादत्र भक्तिपदप्रयोगो भाक्तः, तथापि भक्तिवत् फलसाधकत्वमेतेषां स्नेहान्तःपातिनाम् । तथाहि— अनियमः सर्वासामविरोधः शब्दानुमानाभ्यामिति सूत्रे अथर्वणोपनिषत्स्था, परं ब्रह्मैतद् यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवतीति विषयवाक्यमुपन्यस्य तत्र धारणादीनां समुदितानामेवाऽमृतसाधकत्वमुत प्रत्येकमपीति संशये,अत्र धारणादिसाधनकलापमुक्त्वा फलमुच्यते इति समुदितानामेव मुक्तिसाधकत्वम् । किञ्चोपलक्षणविधया श्रवणादिनवविधभक्तीनामप्येवमेव साधकत्वं, न तु प्रत्येकमिति पूर्वपक्षे समाधिः।अनियम इत्यादि ।समुदितानामेव तेषां फलसाधकत्वमिति न नियमः । कुतः । सर्वासामविरोध इति ।
सत्पुण्डरीकनयनमित्याद्युपक्रम्य चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेरिति श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते । पञ्चपदीं जपन्नित्याद्युक्त्वा, ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते इति श्रुत्या कीर्त्तनस्य तथात्वमुच्यते । एवञ्च प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः स्यात् । तथाच, परं ब्रह्मैतद्यो धारयति रसतीत्यादिषु, सोऽमृतो भवतीत्यस्य प्रत्येकं सम्बन्धो ज्ञेयः । ननु दण्डो घटकारणमित्युक्तावपि नैकस्यैव तज्जनकत्वमपि तु चक्रचीवरादिभिः सहितस्यैवं । प्रकृतेऽप्येकस्योक्ता कारणतान्येषामपि सङ्ग्राहिकेति समुदितानामेव साधकतेति चेन्न । दण्डादिकारणतायाः प्रत्यक्षेणावगम्यमानतया तत्र तथात्वसम्भवेऽपि प्रकृते कारणता शब्दगम्येति श्रुत्युक्तैव सरणिरिति । ननूक्तन्यायः श्रुतिष्वपि निर्णायको भवत्विति चेन्न। अलौकिकेऽर्थे लौकिकस्यासामर्थ्यात् । अन्यथा ब्रह्म-

णा मनसैव भजनेन निषेकादिकमपि कल्प्यताम् । स्मृतिरपि । केवलेन हि भावेन गोप्यो गावः खगा मृगाः ॥ येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा । एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया । जन्मलाभः परः पुंसामन्ते नारायणस्मृतिरिति । एतदेवोक्तं, शब्दानुमानाभ्यामित्यनेन । स्यादेतत् । श्रवणकीर्तनस्मरणानां मुक्तिव्यवहितक्षणे युगपदपि सम्भवेन यत्रैकस्मिन्नेव भक्ते उक्तसाधनस्तोमसम्पत् तत्रैकेनैव मुक्तावितरसाधनत्वबोधकश्रुतिविरोधः । त्रयाणामेकतरस्योभयोर्वान्यथासिद्धत्वम् । तत्राप्यऽनियमात् किमन्यथासिद्धमित्यनिर्द्धारः । तस्मान्न प्रत्येकं कारणत्वं मुक्तिसहम् ।' तथा समुदितानामपि माऽस्तु कारणता । ज्ञान एव उपक्षयस्य वक्तुं शक्यत्वात् । श्रुतीना चोपचारेण नेतु शक्यत्वाच्चेति । मैवम् । प्रेम्णा श्रवणमात्रेण परीक्षिन्मुक्तेः स्मरणमात्रेण चैद्यादिमुक्तेःकीर्त्तनमात्रेण भीष्मादिमुक्तेर्ध्यानमात्रेण सगुणभक्तमुक्तेश्च दर्शनात् । चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेः । पञ्चपदीं जपन्नित्वाप्युक्त्वा ब्रह्म सम्पद्यते इत्यादिश्रुतिभिश्चिन्तनमात्रेणैव मुक्तिश्रावणाच्च तृणाऽरणिमणिन्यायेन पृथगेव कारणता । तथाच तार्णाग्नित्वावच्छिन्नं प्रति तृणत्वेन कारणत्ववत् श्रवणजन्यमुक्तित्वावच्छिन्नं प्रति श्रवणत्वेन कारणत्वमिति सिद्धम् । तेन किं कारणतावच्छेदकमित्यपि कुचोद्यं निरस्तम् । यत्र तु एकस्मिन्नियतं श्रवणादीनि मुक्तिसाधकानि भवन्ति तत्र शीघ्रं फलं भवति, न तु कस्याप्यन्यथासिद्धत्वम् । पिप्पल्यापि वायुनिवृत्तिफलसम्भवे शुण्ठीमरिचपिप्पलीभिः शीघ्रं वायुनिवृत्तिफलमिव । न हि तत्रैकस्याप्यन्यथासिद्धत्वम् । तथा सति न निक्षिपेत् ॥

भक्तेर्ज्ञान उपक्षयो दूषितोऽपि पुनः प्रकारान्तरेण दूष्यते । तत्र भक्तेर्ज्ञानाङ्गत्वं पूर्वं दूषितं ज्ञानस्य भक्त्यङ्गत्वव्यवस्थाप-

नेनानुपयोगिनः । इदानीं कासुचिच्छ्रुतिषु कासुचित् स्मृतिषु च ज्ञानोत्कर्ष आपाततो भाति स निरस्यते । तत्र पूर्वं भक्तौ ज्ञाना-नुपयोगः प्रदर्श्यते । स चान्तराभूतग्रामवदित्यधिकरणे स्पष्टः । तथाहि । ननु ज्ञानमार्गे यथा पूर्णज्ञानसम्पत्तौ स्वात्मब्रह्माभेदा-नुभवात्मिका वृत्तिर्भवति तथा भक्तिमार्गे सिद्धभक्तेः पुरुषस्य, भक्त्या मामभिजानातीति वाक्योक्ते ज्ञाने स्वात्मपुरुषोत्तमाभेदा-ऽनुभवात्मिका वृत्तिर्भवति, न वेति संशये अन्तर्यामिब्राह्मणे, यः पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवी-मन्तरो यमयतीत्यारभ्य, य आत्मनि तिष्ठन्नित्यन्तैर्वाक्यैः परमात्मा सर्वान्तरत्वेन श्रावितः । स च यदन्तस्तिष्ठति तं स्वान्तःस्थाप-यति वह्निरिवायोगोलकमित्यन्तर्यामिब्राह्मणे सिद्धम् । एवञ्च श्रौ-तेन येन केनापि साधनेन तस्मिन्नभिज्ञायमाने स्वात्मनस्तथा स-त्त्वेन भेदास्फुरणात् स्वात्मत्वेन ज्ञानं भवत्येवेति पूर्वपक्षे सिद्धान्त-माह । अन्तरेत्यादि । अयमर्थः । ब्रह्मणः सर्वान्तरत्वेऽपि एतदा-त्मनस्तदविभक्तत्वेऽपि, सर्वस्य वशी सर्वस्येशान इत्यादिश्रुतिभिः सर्वेशितृत्वादिरूपेणैव ज्ञानं भवति, न तु अभेदस्फुरणमपि । उत्कटभक्त्या तेषामेव स्फुरणात् । नन्वभिज्ञाने सर्वांशज्ञानदर्शनात् तदंशाज्ञाने को हेतुरिति चेत् । उच्यते । इयदामननादिति सूत्रे ब्रह्मानन्दाद् भजनानन्दाधिक्यमुक्तम् । स भजनानन्दस्तु कृपा-ऽऽधिक्य एव भवति । भगवान् भजतां मुकुन्दो मुक्तिं ददाति क-र्हिचित् स्म न भक्तियोगमिति वाक्यात् । नच सर्वदा दानं शङ्क्य-म् । कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः । अत्रापि दातृवचन-स्तेन कृष्णं विदुर्बुधा इति वाक्ये दानस्याप्युक्तत्वात् । तथाचा-त्यनुग्रहे ददातीति वाक्याविरोधेन सिद्ध्यति । एवं सति तादृश-भजनानन्दव्यवधायकं स्वात्मत्वेन ज्ञानं भगवता न सम्पाद्यते ।

स वै नैव रेमे, तस्मादेकाकी न रमते सद्वितीयमैच्छादित्यादिश्रुतिभ्यो मुख्यभक्तिमार्गस्य क्रीडार्थत्वावगमाच्च भेदे च क्रीडासम्भवात्। अयमर्थो, न प्रयोजनवत्त्वादिति सूत्रेण पूर्वमाप्तकामत्वश्रावणात् सृष्टिकरणं विरुद्धमित्याक्षिप्य, लोकवत्तु लीलाकैवल्यमिति सूत्रेण पूर्वपक्षनिरासपूर्वकं लोके यथेश्वरो लीलां करोति तत्र न तदतिरिक्तं प्रयोजनान्तरं तद्वदत्रापीति समाधाय लीलास्वरूपमुक्तम्। कैवल्यमिति। स्वरूपान्नातिरिक्तेत्यत्राप्युक्तम्। इदं वक्तव्यं फलप्रकरणे। स्वात्मत्वेन ज्ञानं हि, यत्रत्वस्य सर्वमात्मैवाभवत् तत् केन कं पश्येदितिश्रुतेर्भेदविलापकत्वेन भजनानन्दान्तरायभूतं यदि स्वात्मत्वेन ज्ञानं सम्पादयेद् भजनानन्दं न नश्यात्। कैवल्येन तस्यान्यथाभावात्। तस्मात् स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य पूर्णदशायां न सम्भवति। मध्यवाचकस्य एवं बाधकत्वाद् अन्तरेत्यव्ययस्यार्थ उक्तः। तत्र दृष्टान्तः। भूतग्रामवदिति। ब्रह्मानन्दानुभवे पुत्रपश्वादिवद्भजनानन्दानुभवे स्वात्मत्वेन ज्ञानं बाधकम्। स्वात्मनो भक्तस्य। तस्यैष आत्मा वृणुते तनुं स्वामिति श्रुतेः। ननु स्वात्मत्वेन ज्ञानं न बाधकम्। उद्धवादिभक्तेष्वपि, त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु॥ मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम्॥ भवतीनां वियोगो मे इत्यादिवाक्येभ्यो ज्ञानोपदेशश्रवणात्। स च स्वात्मब्रह्माभेदज्ञानफलक इत्यात्मत्वेन ज्ञानाभावे तदभेदोपदेशानुपपत्तिरेव स्यादिति वक्तव्यमेव। एवं सति भक्तिमार्गाज्ज्ञानमार्गोत्कर्षश्च सिद्ध्यतीतिचेन्न। उपदेशान्तरवत्तदुक्तेः। तथाहि। न ह्यत्राभेदज्ञानायोपदेशः, किन्तु यथा योगोपदेशसंस्कृतस्य वपुरग्न्यादिभिर्नोपहन्यते। अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुरिति वाक्यात्। तथा प्रकृतेऽपि भक्तिभावस्य रसात्मकत्वेन संयोगविप्रयोगभावात्मकत्वाद् द्वितीयस्य मलयानलाद-

तिकरालत्वेन कदाचिज्जायमानः स भक्तवपुरादेस्तिरोधानं विदध-दग्रिमभजनानन्दं प्रतिबध्नीयादिति तन्निवृत्त्यर्थं, वपुषि ज्ञानोपदे-शसंस्कारसंस्कृतत्वार्थं चाज्ञानोपदेशो भगवत्कृतो, न त्वभेदज्ञानाय। अन्यथोपदेशानन्तरं बदरीं गच्छन्नुद्धवो विदुरं प्रति, इहागतोऽहं विरहातुरात्मेति न वदेत्। तथा गोपीनां मद्वियोगार्धिं मत्सन्देशैर्वि-मोचयेत्युक्त्वा, धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन*प्रत्या-गमनसन्देशैर्बल्लव्यो मे मदात्मिका इति भगवताऽपि तन्निवृत्तिरे-वोपदेशप्रयोजनमुक्तमिति । ननु योगोपदेशेनापि भक्तदेहस्थिति-सम्भवे किं ज्ञानोपदेशेनेतिचेत् । सत्यम् । प्रयोजनान्तरस्याप्युन्नेतुं शक्यत्वात् । तथाहि । शरीराध्यासवतस्तद्भिन्न आत्मा तत्त्वं, न तु शरीरादिरित्युपदेशो ज्ञानमार्गे यथा, तेन च शरीरादावात्म-बुद्ध्या यः स्नेहादिः सोऽपगच्छति। तथाच, य आत्मनि तिष्ठन्नि-त्यादिश्रुतिसिद्धः सर्वेषामात्मनोऽप्यात्मा पुरुषोत्तम इति बोध्यते । तेन पुरुषोत्तमे निरुपाधिस्नेहस्तत्सम्बन्धित्वेनात्मनि स सिद्ध्यतीति। नन्वेवम्भावस्य पूर्वमेव सिद्धत्वात् सिद्धसाधनमितिचेन्न । सहजस्य शास्त्रार्थत्वेन ज्ञानेऽतिदार्ढ्यसम्भवात् । उत्तरमीमांसावत् प्राज्ञे । तदुक्तम्, असन्दिग्धोऽपि वेदार्थः स्थूणाखननवन्मतः *मीमांसा-निर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयमिति। तस्मान्न जीवाभेद उपदेश-फलम् । उपदेशकार्यं तु जीवनसम्पत्तिरेव । तस्मान्न ज्ञानो-त्कर्षो भक्तेः। एतदुक्तम्— अन्यथाऽभेदानुपपत्तिरितिचेन्नोपदे-शान्तरवदितिसूत्रभाष्ये । नन्वत्राऽभेदपदेन कथमभेदोपदेशलाभ इति चेन्न । दृष्टान्तकोटिप्रविष्टोपदेशान्तरपदव्युत्पत्त्या प्राप्तोपदेश-लक्षकत्वादभेदपदस्य अन्यथाऽन्वयानुपपत्तेरभेदवाच्यार्थस्य ॥

ननु श्रुतिनिर्णयो वक्तव्यः सूत्रेण, न तु स्मृतीनामितिचेद्

अत्र श्रीपुरुषोत्तमाः।सन्देशे, भवतीनां वियोगो मे न हि सर्वात्मना

क्वचित् * आत्मत्वाद्धवनवश्यत्नात् ससत्वाकृत्वात् स्वभावतः ॥ यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही । तथाऽहं च मनः-प्राणबुद्धिन्द्रियगुणाश्रयः ॥ आत्मन्येवात्मनात्मानं सृजे हन्म्यनु-पालये। आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ आत्मा ज्ञान-मयः शुद्धो व्यतिरिक्तो गुणावृतः। सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्ति-भिरीयते ॥ येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः । तन्नि-रुन्ध्यादिन्द्रियाणि विनिद्रः प्रतिपद्यत इत्युक्त्वाग्रे, एतदन्तः समा-म्नाय इति कथनेनास्य श्रौतत्वनिश्चयात् । एकादशे विधिश्च प्रतिषेधश्च निगमो हीश्वरस्य ते * अवेक्षतेऽरविन्दाक्ष गुणादोषं च कर्मणामित्याद्युद्धवप्रश्नेन, मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् * एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदेत्यादिभग-वदुक्तोत्तरेण चापि तस्य श्रौतत्वाच्चेत्याहुः। तपोब्रह्मलोकगाः कृष्ण-माराधयामासुर्गोकुले धर्ममङ्गले इत्याथर्वणश्रुत्यां गोकुललीला उक्ता भक्तसम्बन्धिन्यः सामान्यतः। ता एव दशमे विशेषत उक्ता इति तन्मध्यपातिनी अभेदोपदेशरूपा लीला। तस्याः सङ्गतिबोधनार्थम-धिकरणमिति तद्बोधाय द्वितीया सरणिर्बोध्या। पूर्वाऽधिकरणेषु भक्तिप्रतिपादनाद्भक्तेर्ज्ञानस्य जन्यत्वप्रतिपादनस्यावश्यकत्वात्। तेनैतस्या एव स्मरणं, नान्यामामित्यत्र को हेतुरित्यपि निरस्तम्। प्रकृतमनुसरामः। ननु तथापि, तद्योऽहं सोऽसौ योऽहमित्यैतरेयके, तैत्तिरीयके च, अहमस्मि ब्रह्माहस्मीति पठ्यते। अत्र मध्यस्थं ब्रह्मपदमुभयत्र सम्बध्यते। तेनावृत्त्या स्वात्मनो ब्रह्मत्वविधानेन ब्रह्मणः स्वात्मत्वविधानेन व्यत्ययः। तस्माज्जीवाभेदः सिद्ध्यति। तथा भक्तवाक्यमपि। कृष्णोऽहमहं कृष्ण इति। अतस्तदभेदज्ञानं भक्तिफलमिति। यद्यभेददर्शनस्य भक्तिफलत्वं न स्यात्तदा ली-लास्थानां ब्रह्माभेदो न स्फुरेत् । स तु श्रूयत इति पूर्वोक्तं न

साधीय इति चेन्मैवम् । भक्तेः रसत्वस्य पूर्वमुपपादितत्वात्तस्य च विभावानुभावव्यभिचारिसंयोगनिष्पन्नत्वेन उद्धवादिवाक्येन संयोगविप्रयोगात्मकत्वेन च सिद्धस्य द्वितीयभावादिके यथेतरेषु प्रलापादयो व्यभिचारिभावास्त।।तितिगाढभावेऽभेदस्फूर्तिरप्येको व्यभिचारिभावः।न तु सार्वदिकस्तदा स्वात्मानं तत्त्वेन विशिषन्ति । ते चात्मत्वेनेति ज्ञानस्य भक्तिफलत्वाभावात्।इदमुक्तं,व्यतिहारो-विशिंषन्ति हीतरवदिति सूत्रभाष्ये।सूत्रं त्वेवं योजनीयम् ।इतरवद् अश्रुप्रलापादिवद् भक्तानामहं कृष्णः कृष्णोऽहमिति व्यतिहारः विशेषणबुद्धिव्यत्ययो व्यभिचारिभावः । हि यतो विशिंषन्ति भगवद्दृष्टत्वेनाऽऽस्यादीनि च । अनेन प्रकारेण कदाचिदेव विशिषन्ति, न सर्वदाऽतस्तथेति ॥

शङ्कराचार्यास्तु, बृहदारण्यके उषस्तप्रश्ने, यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वेत्याकारकः । तथाऽग्रे कहोडप्रश्नोऽप्येवमेव । उत्तरं च याज्ञवल्क्येनानेन प्रकारेणोक्तम् । तत्र प्रथमस्य, यः प्राणेन प्राणिति स त आत्मा सर्वान्तरस्तन्मे, योऽपानेनापानिति स त आत्मेत्यादिनोत्तरम् । उषस्तेन तेन पुनः पृष्टेन, न दृष्टेर्द्रष्टारं पश्येन्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीथा, एष ते आत्मा सर्वान्तराऽतोऽन्यदार्त्तमित्युत्तरितम्। द्वितीयस्य कहोडप्रश्नस्य,योऽशनाया-पिपासे शोकं मोहं तरति मृत्युमत्येतीत्याद्युत्तरम् । तत्र किमनयो-र्विद्याभेदोऽस्ति न वेति संशये रूपभेदात् पूर्ववत् प्राणादीनां कर्त्ता सर्वान्तरत्वेनोक्तः । परत्र चाशनायापिपासादिरहित इति प्रवचनभेदाच्च विद्या भिद्यते इति पूर्वपक्षे । रूपाभेदादेकविद्यात्व-मिति सूत्रं व्याख्याय सूत्रद्वयात्मकमधिकरणं चाङ्गीचक्रुः ॥

रामानुजाचार्यास्तु, चतुःसूत्रमधिकरणमङ्गीकुर्वन्तः पूर्वोक्तमेवार्थमाहुः

तदेतत् सर्वं, स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः। उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने चेति सूत्राभ्यामेव सिद्धमिति तन्मतं चिन्त्यम्। सूत्रार्थस्तु सेवाप्रकरणे वक्तव्यः। यत्तु शंकराचार्याः,व्यतिहारसूत्रे ऐतरेयवाक्यं, त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसीति जाबालवाक्यं चोदाहृत्य किमिह व्यतिहारेणोभयरूपा मतिः कार्योतैकरूपेति सन्देहे उभयरूपमतिकरणे ईश्वरसंसारिणोर्निकर्षोत्कर्षावापद्येते इत्येकरूपैव मतिः कार्येति पूर्वपक्षमुक्त्वा, उभयरूपैव कार्या,अन्यथोभयाम्नानमनर्थकं स्यादिति। न चोक्तदोषापत्तिः। अनेन प्रकारेणाध्यात्मैक्यस्यैव चिन्तनीयत्वात् । नन्वत्र द्विरूपा मतिः कर्त्तव्येत्युच्यते, फलतस्त्वेकत्वमेव दृढीभवति।यथा ध्यानार्थेऽपि सत्यकामादिधर्मोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति, तद्वदित्याहुः। तच्चिन्त्यम् । तस्या मतेर्वचनमात्रजन्यत्वेन विशेष्यविशेषणभावेन तादृशभावनामात्रमेव,न तु भेदापगमः। आहार्यज्ञानत्वात् । नचैतेन फलत ऐकात्म्यसिद्धिः सम्भवति । सम्भवेद् यदि जीवमात्रमेव ब्रह्म स्याज्जीवस्य च व्यापकत्वं स्यान्न त्वेवम् । अधिकं तु भेदनिर्देशादिति सूत्रे ब्रह्माधिक्यस्य, नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारादितिसूत्रे जीवाणुत्वस्य च प्रतिपादनात् । तथाहि—

द्वितीयाध्यायप्रथमपादे त्रिसूत्रमधिकरणमिदम्। तत्र, इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरितिसूत्रे ब्रह्मणो जगत्कारणत्वे इतरस्य जीवस्यापि ब्रह्मत्वेन, तत्सृष्ट्वा तदेवानुप्राविशत्, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति व्यपदेशात् तद्धिताकरणादिदोषप्रसक्तिरित्याशङ्क्य, द्वितीयेन समाधीयते । अधिकमित्यादिना । तुः पक्षव्यावर्त्तकः । यदि ब्रह्म तावन्मात्रं भवेत् तदायं दोषः । तत् पुनर्जीवाज्जगतश्चाधिकम् । तत्र हेतुः । भेदानि-

दृशात् । आत्मा मन्तव्यो निदिध्यासितव्य इत्यत्र कर्मकर्तृत्वेन विज्ञानानन्दत्वेन च भेदकथनादिति । पूर्णस्य न नियमेनांशहितकरणनियमः । स्वदेहेऽपि नखनिकृन्तनादिदर्शनात् । अन्यथा सर्वेन्द्रियव्यापाराभावप्रसङ्गादिति । तृतीयसूत्रे च दृष्टान्तेनार्थः समर्थित इति । तथा, नाणुरतच्छ्रुतेरित्यत्र जीवो नाणुर्भवितुं युक्तः । अतच्छ्रुतेः । अणुत्वविपरीतव्यापकश्रुतेः । स वा एष महानज आत्मा योऽयं विज्ञानमय इति चेन्न । इतराधिकारात् । इतरस्य परब्रह्मणोऽधिकारात् । तथाचेदं वाक्यं प्रकरणानुरोधाद् ब्रह्मपरं, न तु जीवव्यापकत्वसाधकमिति । अत्रानुपपत्तिपरिहारो, भाष्यतत्प्रकाशजीवव्यापकत्वखण्डनवादेभ्यः कार्यः । विस्तरभियात्र न लिख्यते । तथाच निरुपधिप्रियत्वस्य ब्रह्मधर्मत्वं वाक्यान्वयाधिकरणे उक्तमिति भक्तेस्तद्रूपत्वेनानन्दधर्मत्वं सिद्धम् । सूत्राऽर्थस्तु प्रमाणप्रकरण एवोक्तः । तादृशब्रह्मधर्मस्य प्रियत्वस्य अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा इति श्रुतौ स्वरूपधर्माणां नित्यत्वोक्त्या नित्यत्वमप्रत्यूहम् । नचोच्छित्तिभिन्नो धर्मो यस्येति, नित्य इति यावत् । तथाच नानया धर्मनित्यतासिद्धिरिति वाच्यम् । अविनाशीति पदेनैव तन्नित्यत्वसिद्धौ पौनरुक्त्यात् । अतो न विद्यते उच्छित्तिर्येषां तेऽनुच्छित्तयस्तादृशा धर्मा यस्येति व्युत्पत्त्या पूर्वोदितार्थस्यैवोपादेयत्वात् । नचैवं सति, पुनश्च भूयाद्भगवत्यनन्ते इति, दानव्रततपोहोमजपस्वाध्यायसंयमैः * श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते, भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येनामुष्मिन्मनःकल्पनमित्यादिस्मृतिश्रुतिविरोध इति चेन्न । तस्या नित्यत्वेऽपि, ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् * सरहस्यं तदङ्गं च गृहाण गदितं मयेत्यत्र ज्ञानवद्भगवदुक्तधर्मादिभिर्मनस्याविर्भावात्तन्नित्यत्वस्य सुदृढत्वात् । अत एव प्रार्थनावाक्ये

पुनः—पदम् । विद्यमानस्यैकस्मिन् सम्बन्धे निवृत्ते कालान्तरे तस्य सम्बन्धे पुनःपदप्रयोगात् । यथा पुनरागतिरिति । तद्वत् पुनर्भवनप्रार्थनस्य तत्कादाचित्कानुभवस्य च न विरोधः । किञ्च । यथा भगवान् मानसीयः । स मानसी न आत्मा जनानामिति श्रुतेः । तद्वद् भगवत्सम्बन्धनैकव्यान्मनस्याविर्भवन्ती भक्तिरपि मनोधर्मत्वेन व्यवह्रियते । यथा वह्निनैकव्यात्तारतम्यप्रयुक्तोष्णत्वानुभवतारतम्यम् । तथैव भगवन्नैकव्यतारतम्येन भक्त्यनुभवतारतम्यमिति न लक्षणश्रुतेरपि विरोधः । एवं मुक्ताभिलषितत्वमपि, सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत * दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् * नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुरित्यादिवाक्येभ्यो ज्ञेयम् । ननु नेदं साम्प्रतम् । यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते इति श्रुत्या सर्वकामलये अमृतत्वश्रावणान्मुक्तानामभिलाषासम्भवात् तत्सत्त्वे तु मुक्तत्वस्यैवाभावादितिचेन्न । इतः पूर्वं कामयमानस्य पुनरावृत्तिमुक्त्वा अथाऽकामयमान इति तद्व्यवस्थां प्रतिज्ञाय, योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीत्युक्त्वा, तत्संग्रहोऽस्मिन् मन्त्र उच्यते । तत्र संग्राह्यार्थे ब्राह्मणे अकामस्याप्यात्मकामत्वश्रवणेन तदर्थसंग्राहकेऽस्मिन्मन्त्रेऽपि तदतिरिक्तसर्वकामानां सर्वपदेन विवक्षितत्वेनात्मकामातिरिक्तकामानामेव लयस्य मुक्त्यधिकारत्वेन

विवक्षितत्वात् । भक्तेश्चोक्तधर्मत्वेन तत्प्रापकत्वेन च तदभिलाषस्यात्मकामानतिरिक्तत्वात् । नच भक्तेः स्नेहरूपत्वेन, भक्तिर्हेया स्नेहत्वादित्यनुमानेन हेयत्वापत्तिः शङ्क्या । ब्रह्मविषयत्वात् । यथा सङ्गत्वेन न हेयत्वं सत्सङ्गस्य । मोक्षद्वारत्वात् । किन्तु असत्सङ्गत्वेन । तथा प्रकृतेऽप्यन्यविषयकरागस्यैव हेयत्वम् । तेन पूर्वोक्तानुमाने मोक्षाननुगुणत्वं संसारानुबन्धित्वं वोपाधिः । तदुक्तं शाण्डिल्यर्षिणा, हेया रागत्वादितिचेन्नोत्तमास्पदत्वात् सङ्गवदिति सूत्रेण । इयं च भक्तिः फलरूपा । तल्लक्षणं तूक्तं श्रीकृष्णस्नेहत्वमिति । पूर्वोक्तलक्षणा प्रेमपूर्वककायिकव्यापाररूपा तु साधनभूता । तदुक्तम् । सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदिति सूत्रभाष्ये । तत्र यमेवैषवृणुत इति श्रुतिः साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वमाह । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुतिः साधनान्तरमप्याह । एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयं, किं नेति संशये, साधनान्तरविधिरेवादरणीया । अन्यथा शास्त्रवैकल्यापत्तेः । तत्राह, सहेत्यादि । अयमर्थः । मर्यादापुष्टिभेदेन वरणस्य द्वैविध्याङ्गीकारेण मर्यादापक्षेण सहकार्यन्तरविधिरुच्यते । पुष्टौ तु नान्यापेक्षेति न श्रुतिद्वयविरोधः । ननु किमिसन्तरङ्गाणां शमादीनां पाक्षिकत्वमुच्यत इतिचेन्न । तमेतं वेदानुवचनेन, शान्तो दान्त इत्यादिवाक्यैः साधनं हि कायिकं मानसिकं चेति त्रिविधम् । तत्र मनसैवानुद्रष्टव्यमिति श्रुतेस्तृतीयं मुख्यम् । तदपि तावदेव मार्यादिकस्य विधेयत्वेन कार्यं, यावत् स्नेहो न भवति । यतः स्नेहवतस्तूक्तं शान्त्यादिवाक्योक्त तृतीयं साधनमपि विध्यादिवत् । यथा तद्वतो विधिरर्थवादो वा अप्रयोजकस्तद्वतस्तत एव सम्भवात् । तथा भगवत्प्राप्ताविदमिति । एवं फलरूपा साधनरू-

षेति द्विधा विहिता भक्तिरुक्ता, निर्गुणा च । सगुणा विहिता भक्तिस्त्वनेकधा । भक्तिमार्गो बहुविध इति वाक्यात् । सगुणा तु त्रिधा । विद्यान्तर्भूता ज्ञानाङ्गभूता कर्माङ्गभूतेति । सा च गौणश्रवणादिरूपा भक्तिः, त्रिगुणैकविधा । सगुणाद्यास्तु श्रवणादिनवानां रजःसत्त्वतमोमिश्रितानामेकाशीतिभेदा भवन्तीति सगुणा एकाशीतिविधेति श्रीधरस्वामिनः । अन्यैस्तु, विहिता भक्तिर्द्विधा फलसाधनभेदेन । फलरूपैकधा । साधनरूपा तु द्विधा । ज्ञानाङ्गभूता, स्वातन्त्र्येण मुक्तिदात्री चेति । तत्राद्या, देवानां गुणलिङ्गानामिति वाक्योक्ता । द्वितीया तु, भक्तिं विधानपरमां ज्ञनकैरविद्याग्रन्थिं विभेत्स्यसि ममाहमिति मरूढामितिवाक्योक्ता ज्ञानाङ्गभूताऽपि द्विधा सगुणनिर्गुणभेदेन । तत्र मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये इति वाक्योक्ता निर्गुणा । सगुणा तु त्रिधा । ज्ञानमिश्रा, वैराग्यमिश्रा, कर्ममिश्रा चेति । तत्र ज्ञानमिश्रा त्रिधा । उत्तमत्वादिभेदात् । सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः * भूतानि भगवत्यात्मन्येष भागवतोत्तम इति वाक्योक्तोत्तमा ज्ञानमिश्रा । ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च * प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यम इति वाक्योक्ता मध्यमा सा।आर्चायामेव हरये पूजां यः श्रद्धयेहते * न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत इति वाक्योक्ताऽधमा सा । वैराग्यमिश्रैकविधा । न कामकर्मबीजानां यस्य चेतसि सम्भवः * वासुदेवैकनिलयः स वै भागवतोत्तम इति वाक्योक्ता। कर्ममिश्रा त्रिधा, कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् *यजेद् यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ विषयाऽनभिसन्धाय यश ऐश्वर्यमेव वा । आर्चादावर्चयेद् यो मां पृथग्भावः स राजसः ॥ अभिसन्धाय यद्धिंसां दम्भं मात्सर्यमेव च । आर्चादावर्चयेद्यो मां पृथग्भावः स तामस

इति वाक्येभ्य इत्याह । अविहिता भक्तिश्चतुर्धा । कामात् क्रोधाद्भयात् स्नेहाद्यथा भक्त्येश्वरे मनः * आवेश्य तदघं हित्वा बहवस्तद्गतिं गता इति वाक्यात् । अत्र स्नेहः स्वसम्बन्धप्रयुक्त औपाधिकः । ईश्वरत्वेन स्नेहस्य विहितभक्तित्वादित्युक्तम् । सम्बन्धाद् वृष्णयः स्नेहाद्यूयं भक्त्या वयमिति वाक्यं तु विहिताऽविहितभक्तिसामान्यग्रहणमित्यदोषः । भक्तिसामान्यस्य मुक्तिसाधनत्वं, कामादीतरत्र तत्र चायतनादिभ्य इति सूत्रे भाष्ये । तथाहि । ज्ञानमार्गाद्भक्तिमार्गस्य साधनादुत्कर्षाय ज्ञानमार्गे बाध्यकानामपि साधकत्वमाह । कामादीतरत्रेति । इतरत्र माहात्म्यज्ञानयुताया ईश्वरत्वेन प्रभौ निरुपधिस्नेहरूपायाः शास्त्रमात्रत्वेन विहिताया भक्तेः सकाशाद्भिन्नायामविहितायां भक्तौ भगवद्विषयकं कामाद्येव मुक्तिसाधनम् । हेतुभूतं वाक्यं तूक्तमेव । आदिपदात् पुत्रत्वसम्बन्धित्वद्वेषादिसंग्रहः । तेन भगवत्सम्बन्धमात्रस्य मुक्तिहेतुत्वमित्युक्तं भवति । तत्र च विहितभक्तावपि कामादि साधकम् । ईश्वरत्वेन ज्ञानेऽपि भर्तृत्वेन ज्ञानस्य पुत्रत्वादिज्ञाने स्नेहस्य सम्भवादिति । यद्वा । विहितभक्तौ आयतनादिभ्यो गृहादिभ्यः शास्त्रे हेयत्वेनोक्तेभ्योऽपि मुक्तिः । आर्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याऽहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तमानो यावदायुषं ब्रह्मलोकमभिसम्पद्यते, न स पुनरावर्तते, न स पुनरावर्त्तते इति छान्दोग्यश्रुतेः । श्रुत्यर्थस्तु भाष्यप्रकाशे एवं विहितः । आचार्यकुलाद् गुरुगृहाद् वेदमधीत्य गुरोः कर्मातिशेषेण गुरोः सेवारूपं यत्कर्म तत् कृत्वा ततोऽतिशेषोऽवशेषो यः कालस्तेन कालेन वेदाध्ययनं साङ्गं सरहस्यार्थज्ञानपुरःसरं कृत्वा समा-

हृत्य जिज्ञासाद्वयमसापनोत्तरमाचार्यकुलान्निवृत्य दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहितकर्मा तिष्ठन् शुचौ देशे स्वाध्यायमधीयानो विविक्ते स्वाध्यायब्राह्मणोदितप्रकारे पवित्रे देशे यथावदासीनः आवृत्तिमधीतस्य कुर्वन् धार्मिकान् विदधत् पुत्रान् शिष्यांश्च धार्मिकान् विदधद् आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य हार्देऽन्तर्यामिणि परे ब्रह्मणि बाह्याभ्यन्तरेन्द्रियाणि सम्यक् स्थापयित्वा, ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, तमेव शरणत्वेन ज्ञात्वा कर्माणि तत्र संन्यस्येति यावत्। तीर्थेभ्योऽन्यत्र सर्वाणि भूतान्यहिंसन्। तीर्थानि शास्त्रादिष्टा भिक्षोपायास्तेषु परपीडापि सम्भवति। यथा याज्ञवल्क्यस्य कुरुपाञ्चालस्थब्राह्मणैः सह चर्चायाम्। तदादिभ्यो भिक्षाटनाद्युपायेभ्योऽतिरिक्तस्थले हिंसां परपीडां चाकुर्वन् यावदायुषं यावज्जीवं ब्रह्मलोकमिति। नचात्र शुचौ देशे स्वाध्यायमधीयान इति कर्ममार्गीयसाधनोपदेशात् कथं भक्तिमार्गपरत्वमस्या इति शङ्क्यम्। भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाऽभिवृद्धिस्वभावत्वात् कर्ममार्गीयधर्मोक्तेः। अन्यथाऽऽत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येति न वदेत्। युक्तं चैतत्। प्रपाठकोपक्रमे, अथ यदिदमस्मिन् ब्रह्मपुर इत्यादिना दहरविद्योपक्रमाद् एतद्वाक्योपक्रमे च, तद्धैतद् ब्रह्मा प्रजापतये उवाचेत्याकारकं तत्पदेन पूर्वोक्तब्रह्मोपक्रान्तमित्युपसंहारे कर्मणोऽशक्यनिरूपणत्वात्। यत्तु कर्मणो निरर्थकत्वपरिजिहीर्षया हार्दाऽऽत्मज्ञानिभिरनुष्ठीयमानस्य कर्मणः फलवत्त्वेन अर्थवत्त्वमाह। आचार्यकुलादित्यत्र,न स पुनरावर्त्तत इत्यस्य महाप्रलयात् पूर्वकाले नावर्त्तते, महाप्रलयानन्तरं त्वावर्त्तत इत्यर्थकत्वं चेति तट्टीकाकृतोक्तम्। तन्न। उपक्रमविरोधात्। वाक्यभेदप्रसङ्गात् कर्मनिरूपणस्याकस्मिकत्वापत्तेश्च। न स पुनरावर्त्तत इत्यत्र लक्षणाप्रसङ्गाच्च।

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् * योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेति वाक्येनैव निरूपिता कल्पतरुस्वभावा भक्तिः । सूत्राणामर्थान्तरं तु भाष्यप्रकाशान्निरमनीयमिति सर्वं शुभम् ॥

इति श्रीविद्वन्मण्डन—गोकुलोत्सवात्मजगोपेश्वरविरचिते
भक्तिमार्त्तण्डे प्रमेयप्रकरणं द्वितीयं
संपूर्णतामगमत् ॥ २ ॥



## अथ साधनप्रकरणं तृतीयम् ॥ ३ ॥

---

अथ तत्र साधनं विमृश्यते। तत्र यज्ञादीनि साधनानि। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीतिश्रुतेः।यद्यप्यत्र यज्ञादीनां विविदिषोत्पत्तौ विनियोगो युक्तस्तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासातिशयस्याप्रायणादनुवर्त्तमानस्य ब्रह्मप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानीति केचिदाहुः। विवेकादिभिर्ध्रुवानुस्मृतिश्रुतेः।विमोको रजस्तमोऽनभिष्वङ्गः।शान्त उपासीतेति श्रुतेः।आरम्भणसंशीलनं पुनःपुनरभ्यासः। सदा तद्भावभावित इति स्मृतेः। क्रिया पञ्चमहायज्ञाद्यनुष्ठानम्। क्रियावानेष ब्रह्मविदां वरिष्ठ इति श्रुतेः। सत्यार्जवदयादानाऽहिंसानभिध्याः कल्याणानि। सत्येन लभ्यस्त्वेष विरजो ब्रह्मलोक इति श्रुतेः। देशकालवैगुण्यान्मनसो गृहास्वस्थत्वमवसादस्तद्विपर्ययोऽनवसादः।नायमात्मा बलहीनेन लभ्य इति श्रुतेः।सन्तोषोऽनुद्धर्ष इति स्वरूपं चाहुः॥ गुप्ताचार्यादयस्तु गुप्तादिद्वादशभूमिकोऽस्य प्रेम चरमाविद्यानाशकालिकमिति प्रेमरसायने विश्वनाथ आह। तथाहि। उत्प्लुतस्य चित्तस्य मम स्यादित्याकारपरिणामः प्रेमा यथाकथञ्चिद् व्यक्ता दर्शनोत्सुकता ललितम्। स्फुरिति तच्छलावलोकनमुक्तम्। यत एव अवसरादिकृतदृष्टिविच्छेदकृतम्। विश्लिष्टेष्टस्य स्वच्छन्दवीक्षणेन द्रुतचित्ते अःकारो मिलितम्। प्रेमाधारादिना सांमुख्याद् द्रुतं चित्तम्। प्रेमाधारगतस्येतरविषयकानुरागज्ञानेन प्रेमविषये नायकादौ जातेन प्रेमाधारविषयकप्रेमानुगतरोषजनितकलहेन द्रुतचित्तस्य प्रेमविषयाकारश्लुभितम्। उत्पत्तिमारभ्य सवासनस्य श्रवणस्यावस्थात्वम्। एवमन्यदप्यूह्यम्। सिद्धान्ते तु मुख्यसाधनीभूताया अन्तःकरणशुद्धेः षोडशसाधना-

नि। अन्तःकरणस्य चन्द्रदेवताकत्वेन षोडशकलत्वात्। तेषु च स्नानादि प्रथमम्। प्रशस्तयज्ञो द्वितीयम्। भगवद्विषयकदर्शनस्पर्शपूजास्तुत्यभिवन्दनात्मकं पञ्चाङ्गवद्भजनं तृतीयम्। सर्वेष्वेव सङ्गतेषु भगवद्भावना चतुर्थम्। सत्त्वगुणः पञ्चमम्। इच्छात्यागपूर्वकसर्वसङ्गनिवृत्तिः षष्ठम्। महतां बहुमाननं सप्तमम्। दीनेष्वनुकम्पाऽष्टमम्। आत्मतुल्येषु मैत्री नवमम्। यमो दशमम्। नियम एकादशम्। सांख्यादीनां गुरुमुखाच्छ्रवणं द्वादशम्। भगवतो निरन्तरं श्रवणकीर्त्तनादि त्रयोदशम्। सर्वत्रार्जवं चतुर्दशम्। सत्सङ्गः पञ्चदशम्। अहङ्काराभावो मनःशोधकः षोडशं भवति। मुख्यभक्तिमुपक्रम्य निषेवितानि। तेन, स्वधर्मेण महीयसा * क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः। मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः॥ भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च। महतां बहुमानेन दीनानामनुकम्पया॥ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च। आध्यात्मिकानुश्रवणान्नामसङ्कीर्त्तनाच्च मे॥ आर्जवेनाथ सङ्गेन निरहंक्रियया तथा। मद्धर्माचरणैरेतैः परिशुद्धाशयः स्फुटम्॥ पुरुषश्चाञ्जसाऽभ्येति श्रुतमात्रगुणं हि मामिति श्लोकसुबोधिन्यां तथैव व्याख्यानात्। एवञ्चैतदग्रोक्तानाम्, अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा * तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनमित्यादिवाक्यानां सगुणभक्तिनिन्दकत्वस्फोरणान्न निर्गुणभक्तिमार्गनिषेधकत्वम्। तत्र सर्वत्र भगवद्बुद्धेर्हेतुत्वात्। किञ्च, यदि स्वतन्त्रभक्तिमार्ग एव निषिद्धः स्यात् तदा, भक्तियोगश्च योगश्च मया मानव्युदीरितौ * तयोरेकतरेणैव पुरुषः पुरुषं व्रजेदिति फलस्तुतिरपि विरुद्ध्येत। तत्रैकादशोक्तस्य, मदर्चां संप्रतिष्ठाप्येत्यादिना महता प्रपञ्चेन प्रतिमापूजनस्य न विरोधः। तथा द्वादशोक्तस्य, तान्त्रिकः परिचर्यायामित्यादिनोक्तपूजन-

स्य न विरोधः । इदमुपलक्षण— गुरूपसत्त्यनुग्रहात्मनिवेदन-पापाभावभगवद्भक्तपूजाशङ्खादिधारणादीनाम्। गुरूपसत्तेः कारणत्वं, मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकमिति वाक्यात्। अनुग्रहस्यापि मुख्यकारणत्वं, नायमात्मा प्रवचनेन लभ्य इति, धातुः प्रसादान्महिमानमीशमित्यादिश्रुतेः । भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति स्मृतेश्च। एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् * मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यत इति स्मृतेरात्मनिवेदनस्य । तथा, जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः * नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायत इति स्मृतेः पापाभावस्य। मदीयव्रतधारणमिति स्मृतेर्व्रतकरणस्य, मद्भक्तपूजाभ्यधिकेति वाक्याद्भक्तपूजायाः । मृदा शङ्खचक्रादिकमभिधार्यम् । शङ्खादिचिह्नरहितः पूजां यस्तु समाचरेत् * निष्फलं पूजनं तस्य हरिश्चापि न तुष्यतीति वाक्यात् । वह्निनैव तु संयुक्तं चक्रमादाय वैष्णवः * धारयेत् सर्ववर्णानां हरिसालोक्यकाम्ययेति वाक्यात् तप्तमुद्राधारणं वा । शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा * स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मण इति निषेधस्तु स्मृतौ पूजानुल्लेखात्तद्रहित एव संक्रामति । मृदा निषेधमुपक्रम्य तप्तायसे पर्यवसानाच्च । किञ्च, ब्राह्मणस्य निषिद्धं वैष्णवे च विहितम् । एवञ्च पूर्वात् परबलीयस्त्वन्यायेन ब्राह्मणश्चेद्वैष्णवस्तदा वैष्णवधर्मानुसरणं कर्त्तव्यम् । अधिकं तु शङ्खादिधारणवादादूह्यम् ॥

स्यादेतत् । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य इति, अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वदेत्यादिश्रुतिभिः, न रोधयति मां योगो न सांख्यं धर्म उद्धव * न

स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥ व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः । यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ॥ सत्सङ्गेन हि दैतया यातुधानाः खगा मृगा इत्युपक्रम्य, ते नाधीतश्रुतिगणा नोपासितमहत्तमाः * अव्रताऽतप्ततपसः सत्सङ्गान्मामुपागता इति स्मृतिभिश्च केवलस्नेहस्य धर्मादिरहितस्यैव साधनत्वात् स्वप्राप्तिकथनस्य विरोधः । किञ्च, यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः * व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद् यत्नवानपीति साधनरहितप्राप्तस्वरूपस्येतरसाधनाप्राप्यत्वमुक्तम् । तद्विरोध इति । नैवम् । मार्गभेदेनादोषात् । तदुक्तं, गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध इत्यधिकरणे । अर्थस्तु गतेर्ज्ञातस्य अर्थवत्त्वम् उभयथा मर्यादापुष्टिभेदेन । कृतिसाध्यसाधनसाध्यभक्तिर्मर्यादाभक्तिः । तद्रहितानां भगवदनुग्रहैकप्राप्यपुष्टिभक्तिः । तथाच साधनबोधकानि वाक्यानि मर्यादाभक्तिपराणि । निःसाधनानां भक्तिबोधकानि पुष्टिभक्तिपराणीत्यविरोधः । अन्यथा मर्यादापुष्टिभेदेन व्यवस्थाऽकथने विरोधस्तस्मात् । इदमेव सहकार्यन्तराधिकरणेऽप्युक्तम् । तथाहि । ननु, यमेवेति श्रुतिः साधनान्तरापूर्वकं वरणस्यैव साधनत्वमाह । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुतिः साधनान्तरमप्याह । एवं श्रुतिविरोधे किमादरणीयमिति संशये साधनान्तरविधिरेवादरणीयोऽन्यथा शास्त्रवैयर्थ्यं स्यादिति पूर्वपक्षः । सिद्धान्तस्तु—सहकार्यन्तरविधिः पक्षेण मर्यादापक्षेणोच्यते । पुष्टौ तु नान्यापेक्षेति । अन्यच्च, साधनं खलु कायिकं वाचिकं मानसिकं च विधीयते । तत्र तृतीयं, मनसैवानुद्रष्टव्यमिति श्रुतेर्मुख्यम् । तदपि तावदेव विधेयत्वेन कर्त्तव्यम् । मार्यादिकस्यापि यावत् स्नेहो न भवति ततस्तृतीयं तद्वतो विध्यादिवत् ।

तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत्। विधिश्च तदादिश्च विध्यादी विध्यर्थवादौ तद्वत। तथाच पित्रादौ सहजस्नेहवतो यथा तत्सेवाविधितत्फलबोधकार्थवादौ न तत्प्रवृत्तिप्रयोजकौ । स्वत एव प्रवृत्तेः । तथा भगवत्प्राप्त्यर्थमिदं शमादिकं स्वभावादेव सम्भवतीति न तदर्थं वाक्यापेक्षा। तेन पुष्टिमार्गे वरणमेव साधनमिति । अत एव, प्रदानवदेव तदुक्तमित्यधिकरणे वरणजन्यस्य, स एवाधस्तादित्यादिना सामोपनिषदि श्रावितस्य सर्वात्मभावस्य साधनासाध्यत्वं प्रदानवदेवेत्यंशेनोक्त्वा तदुक्तमित्यनेन प्रमाणमुक्तम्। तच्च,नायमात्मेति श्रुतिः।एतेन, ननुश्रवणादिरूपा प्रेमरूपा च भक्तिरविशेषेण पापक्षयएवोदेत्युत कश्चिद्विशेषोऽस्ति? तत्राधुनिकानामपि भक्तानां दुःखदर्शनाच्छ्रवणादेः पापनाशकत्वश्रवणाद्वाऽविशेषपक्षस्तु सङ्गतः । अथ पापेऽपि श्रवणादिरूपा, तन्नाश एव प्रेमरूपेति विशेषो विभाव्येत सोऽपि प्रेमवतामप्यक्रूरादीनां भगवता सह मणिप्रसङ्गे कापट्यदर्शनान्न साधीयानिति शङ्का निरस्ता । मर्यादायां हि श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः । पुष्टिमार्गाङ्गीकृतेस्तु अत्यनुग्रहसाध्यत्वेन तत्र पापादेरप्रतिबन्धकत्वाच्छ्रवणादिरूपा प्रेमरूपा च युगपत् पौर्वापर्येण वा वैपरीत्येन वा भवति । अत्र श्रवणादिकमपि फलरूपमेव । स्नेहेन क्रियमाणत्वान्न विधिविषय इति न पापनाशकत्वम् । अनुग्रहेण पापक्षयस्तु, स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः * विकर्म यच्चोत्पतितं कथञ्चिद् धुनोति सर्वं हृदि सन्निविष्ट इति वाक्यात् । विकर्म प्राक्तनं तद्दुःखमिति स्वयं च हारिरिति धुनोति। उक्तविशेषणविशिष्टस्य स्वयं विकर्मकृत्यऽसम्भवात् सांसर्गिकं मत्तो भूतं मया कृतमितिवद्वा यत्कृतं विकर्म तत्कथञ्चिदुत्पतितमित्युच्यते । त्यक्तान्यभावत्वेन भगवत्सेवान्यासङ्गेनेन्द्र-

द्युम्नाख्यपाण्ड्यराजवन्महदाद्यागमनाद्यज्ञानं वा उक्तरूपे भक्ते विकर्मोक्तावरुचिज्ञापनाय वा, कथञ्चिदित्युक्तवान् करभाजनः । तेन तर्कितं विकर्मात्राभिप्रेतम् । परेशः कालादिनियामकः । तेन चिरकालभोग्यमपि तत्क्षणेनैव नाशयतीत्युक्तं भवति । एतद् अन्तर्गृहगतासु स्पष्टम् । नचानुग्रहैकसाध्यत्वे भक्तौ तदर्थिषु सदाचारोच्छेदप्रसङ्गः । भगवदनुग्रहस्य ज्ञातुमशक्यत्वेन तेषां निःशङ्कं प्रवृत्तिविरहप्रकृत्युच्छेदावपि स्यातामिति वाच्यम् । तस्मिंस्तस्मिन्मार्गे अङ्गीकारे इच्छाया एव हेतुत्वेन येषु येषु जीवेषु यथा स्वतन्त्रभगवदिच्छा तथैव तेषां प्रवृत्तेरावश्यकत्वात् । अनुग्रहानुरूपेच्छायाः सर्वत्र सहकारित्वात् । इदं यथा तथा स्फुटीकरिष्यते उपरिष्टात्।नच, भक्त्या तुतोष भगवान् गजयूथपाय, प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनमिति वाक्याद् वैपरीत्यं शक्यशङ्कमिति वाच्यम्। यतो न तोषोऽनुग्रहः।पोषणं तदनुग्रह इति वाक्ये व्याख्यानात्, तथा तोषस्यैव स्फुटानन्दांशोद्गमत्वेनानुग्रहस्येषत्स्फुटसत्त्वांशोद्गमत्वेन च भेदात्।तुष्टोऽपि नानुगृह्णाति, अतुष्टोऽपि दीनेऽनुगृह्णाति, अतुष्टोऽपि दयया ददातीत्यादिप्रत्ययाच्च । इदं सूचितं भक्तिहेतौ, अनुग्रहो धर्मान्तरमित्यनेन । नन्विदं निरूपणं गगनकुसुमसौरभमनुकरोति। पुष्ट्यादिशब्दवाच्यमार्गस्यैवाप्रसिद्धत्वादितिचेन्न ।'भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चय इति श्रीमदाचार्योक्तेः । एतद् व्याचक्रुः । तत्र, ते नाधीतश्रुतिगणा इत्यादिना निःसाधनत्वेनोक्तानां गोकुलस्थानां, केवलेन हि भावेनेत्यादिना भक्तिमार्गस्य कथनाद् भक्तिकारणत्वेन पुष्टिर्निश्चीयते । ननु दानादिभिर्भक्तिनिश्चयश्रवणात् किमनुग्रहेणेतिचेन्न । नायमात्मेति श्रुत्याऽनुग्रहस्यैव प्रापकत्वकथनेन व्यापारत्वेनैव दानादीनां भक्तिसाधकत्वादिति श्रीकल्याणरायाः।श्रीमद्गो-

कुलनाथास्तु, यद्यपि भक्तिमार्गो मर्यादादिभेदैर्बहुधा प्रपञ्चिताः कपिलदेवैः, भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यत इत्यादिना। तथैव एकादशे योगेश्वरैर्भक्तभेदकथनेन भक्तिभेदा उक्ता एव। तथापि श्रीमदाचार्यैः— भक्तिमार्गस्य कथनात् पुष्टिरस्तीति निश्चय इति यदुक्तं, तस्य अयमभिप्रायः। कपिलदेवाद्युक्तप्रकारेषु शुद्धपुष्टिलक्षणाभावान्न तत्त्वं, किन्तु माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः * स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथेति पञ्चरात्रोक्तलक्षणा। माहात्म्यज्ञानं न लक्षणप्रविष्टम्। अत एव, सा परानुरक्तिरीश्वरे इति सूत्रे परा सुदृढा निरुपधिरिति यावत्। एतादृश्यनुरक्तिलक्षणत्वेनोक्ता, न तु माहात्म्यज्ञानमपि लक्षणघटकमुक्तम्। उदाहरणं तु माहात्म्यज्ञानेन स्तुवन्त्या देवक्याः स्नेहोत्पत्तौ, समुद्विजे भवद्धेतोः कंसादहमधीरधीरिति वचनात्। तथाचैतादृग्भक्तिमार्गकथनात् प्रमाणपूर्वकनिरूपणात् पुष्टिमार्गोऽस्तीति निश्चय इति॥ श्रीपुरुषोत्तमास्तु—भक्तिरस्य भजन, तदिहाऽमुत्र च फलभोगनैराश्येनामुष्मिन्मनःकल्पनमिति श्रुत्या, दशमस्कन्धे भ्रमरगीतसन्देशे, या मया क्रीडत्येत्यारभ्य, अचिरान्मामवाप्स्यथेत्यन्तेन, युवां मां पुत्रभावेन ब्रह्मभावेनेत्यादिना, दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया कृतानुवृत्तिरित्यादिना, एकादशे च, अथैतत् परमं गुह्यं शृण्वतो यदुनन्दन * सुगोप्यमपि वक्ष्यामीत्यारभ्य, तस्मात्त्वमुद्धवोत्सृज्येति श्लोकद्वयान्तेन, भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ * पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमित्यादिभिर्भगवता भक्तिमार्गस्य कथनात पुष्टिरस्ति। पोषणं मित्यादिभिर्भगवता भक्तिमार्गस्य कथनात् पुष्टिरस्ति। पोषणं तदनुग्रह इति वाक्यादनुग्रहापरपर्यायतदुक्तिबीजभूता कृपा भगवति वर्त्तत इति निश्चयः। अन्यथा भगवानेवं भक्तिमार्गं न वदेत्।

निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् इति वाक्येन उभयोस्ताभ्यां फलसिद्धेर्न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद इत्यनेनोक्तस्येषत्सक्तस्य कामस्य भावात् कर्मणा तदपूर्त्तौ निर्वेदज्ञानेन च यथाकथञ्चित् फलासिद्धिसम्भवात् ।लोकेऽप्युत्तमर्णानुग्रहेण स्वल्पधनस्याधमर्णस्य किञ्चिद्धनग्रहणादिभिर्महार्णविमोकदर्शनात्।कष्टसाध्येप्रायश्चित्तादौ पर्षदनुग्रहेणैव सुकरमहत्तदुपदेशस्य स्मृतिष्वपि दर्शनात्।भवन्तः वनुगृह्णीता, याता वोऽनुग्रहादिवमित्यादिषु तत्प्रार्थनादर्शनाच्च।किञ्च, भक्त्युपदेशो वक्तुरनुरागपूर्वकः।सुकरसाधनोपदेशत्वात् । पर्षदुक्तसुकरप्रायश्चित्तोपदेशवत्।व्यतिरेके कष्टसाध्यदितिपयोव्रतोपदेशवत्।अयमनुग्रहविषयः भक्तिमत्वाद् नारदवत् ।व्यतिरेके शाल्वादिवदित्यनुमानमपि तत्र प्रमाणम् । किञ्च।नायं सुखापो भगवान् देहिनां गोपिकासुतः * ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिहेति स्मर्यते ।यदि पुष्टिमार्गस्येतरविवेको न स्यादस्मिन् वाक्ये द्वयोः सुखेन भगवत्प्राप्तिं न निषेधत्।यस्मादेवं तस्मान्मार्गो भिन्नः पुष्टिरूपः।यदि ज्ञानादिमार्गः पुष्टिमार्गः स्यात् साक्षादेव पुरुषोत्तमप्रापकः स्यात्।यदि तथा भवेत्, यतो वाचो निवर्त्तन्त इति श्रुतिर्वागाद्यप्राप्यत्वं न वदेत् । नैतन्मनो निविशतीत्यादियोगेश्वराश्च न वदेयुः । तथोक्तवाक्ये ज्ञानिनां देहिनां च ज्ञानं निषेधेत् । निषेधो यद्यन्यार्थः स्याद्, यथा भक्तिमतामिति न वदेत् । भक्त्या त्वनन्ययेति, यमेवैष वृणुत इति स्मृतिश्रुती न वदेताम् । यस्मादेवं तस्मात् पुष्टिमार्गो भिन्न इति । किञ्चैवमुक्तिभिश्च यद्यपि युक्तिभिर्भक्तिसिद्धिस्तथापि तादृश्या भक्तेर्भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति स्मृतेरत्यनुग्रह एव भक्तिदानात् तत्कारणत्वेन तन्निश्चय इत्याहुः । मम त्वन्यदपि भाति । तथाहि । चित्तशुद्धि-

तौल्येऽपि केषाञ्चिज्ज्ञाननिष्ठायाः केषाञ्चिद्भक्तिनिष्ठाया दर्शनात् कारणत्वेन पुष्टिरनुग्रहो निश्चीयते । नच चित्तशुद्धौ तारतम्यमिति वाच्यम् । तुल्यत्वात् । अन्यथा ज्ञानोत्पत्तिरपि न स्यात् । एवं सति भक्तावाद्यप्रवृत्त्यन्यथानुपपत्त्या केवलोऽनुग्रहोऽवश्यं मृग्यः । एतदभिसन्धायोक्तं भक्तिमार्गस्येत्यादि । नचैवमप्यनुग्रहसहकारिविशिष्टचित्तशुद्धिरेव भक्तिकारणमिति केवलमनःपदमनतिप्रयोजनम् । किञ्चान्यथा शुद्धेः पूर्वमेव भक्त्युत्पत्तिप्रसङ्ग इति चेन्न । आवश्यकत्वाल्लाघवाच्चानुग्रह एव तद्धेतुरस्तु, कृतं श्रुत्यादिभिः। नचात्र विनिगमकाभावेन सर्वेषामस्तु कारणता, घटं प्रति दण्डचक्रादीनामिवेति वाच्यम्। तत्रान्योन्यसापेक्षतयैव कार्यजनकत्वेन तथात्वं, नेह तथा । साधनरहितानामपि भक्तिदर्शनात् । नाऽपि तेषु जन्मान्तरीयतदनुमानं सम्भवति। न रोधयतीत्यादिनेतरसाधननिषेधात् । जन्मान्तरसहस्रेष्वित्यादीनां मर्यादापरत्वमुक्तं प्राक् । एतच्च भक्तिहेतौ स्पष्टम् । न च तृतीयसुबोधिन्यामुक्तस्य शुद्धितारतम्यस्य विरोधः। आध्यात्मिकाधिदैविकयोरत्यन्तं भेदमाश्रित्य कथनात् । इदं तु, यस्तु आध्यात्मिकः प्रोक्तः सोऽसावेवाधिदैविक इति स्मृतेरभेदमाश्रित्येति न विरोधः । तत्रैतत् स्यात् । नाहं वेदैरित्यादिवाक्यविरोधानपगम इति । तथाहि । भक्तिमार्गस्य वेदादिशास्त्रप्रतिपन्नत्वस्य प्रागेव व्यवस्थापनाद्वेदोक्तसाधनादनतिरेक इति। तत्र प्रतिविदधामः । वेदोक्तत्वेऽपि वेदतात्पर्यगोचरत्वेऽपि जीवकृतवैधसाधनेष्वप्रवेशात्तदुक्तसाधनेभ्यो भिन्न एवानुग्रहः । यदा यस्याऽनुगृह्णाति भगवानात्मभावितः * स जहाति मतिं लोके वेदे च परिनिष्ठितामिति वाक्यात्। यद्यनुग्रहो लौकिकेषु वैदिकेषु वा साधनेषु प्रविशेत्तदेवं सामान्यतोऽरुचिं न वदेत् । नायमात्मा प्रवचनेन लभ्य इति श्रुतिः प्रवचनपदेन

वेदोक्तसकलसाधनप्राप्यत्वं निषिद्ध्य ब्रह्मविदाप्नोति परं, तमेव विदित्वेत्यादि बहुश्रुतिः । प्रवचनपदेन वेदोक्तसकलसाधनत्वोक्त्या तदतिरिक्तसकलसाधनाप्राप्यत्वमाशङ्क्य. न बहुना श्रुतेन न मेधयेत्यंशेन बहुश्रुतज्ञानमपीतरमतप्रतिपन्नं निराकृत्य, यमेवैष वृणुत इत्यंशेनानुग्रहप्रयुक्ताङ्गीकाररूपवरणस्य तत्प्रापकत्वं न वदेत् । यदि च प्रवचनमध्यापनं तदापि वेदोक्तसकलसाधनोपलम्भकत्ववत् स एवार्थः । नाहं वेदैरित्याद्येकवाक्यतास्वारस्यात् । किञ्च, नाहं वेदैरित्युक्त्वा, भक्त्या त्वनन्यया शक्य इति न वदेत् । तस्मान्न विरोधसम्भावनाऽत्र । वस्तुतस्तु पुष्टिमर्यादासाधारणमेव हेतुत्वमनुग्रहे । अत एव गीतातात्पर्ये, धर्मशास्त्रे वेदे च गुर्वादिहननस्य निषिद्धत्वात्ततो निवर्त्तिका भक्तस्यार्जुनस्य मतिः कुमतित्वेन, व्यवहितपूतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या * कुमतिमहरदात्मविद्यया य इति भीष्मवाक्येनोच्यत इति युक्तिमुक्त्वा, एतेन भक्तिमार्गमर्यादा लोकवेदातीतेति तावदयं मार्गो विचारयितुं युक्तस्तदतीतत्वादिति ज्ञापितं भवतीत्युक्तम् । अत एव च, क्वेमाः स्त्रिय इतिश्लोकान्तर्गतव्यभिचारदुष्टपदं सुबोधिन्यां भगवद्भजनेन व्रजरत्नेषु व्यभिचारं भक्तिशास्त्राविरोधादमन्वानाः श्रीमदाचार्याः, वस्तुतस्तु भगवता स्वार्थमुत्पादिता मध्ये कालविलम्बेऽन्यान् गोपालान् पतिबुद्ध्या गृहीत्वा व्यभिचारं कृतवत्यस्तेन दुष्टा अपि जाता इति व्याचख्युः । तदिद, प्रभवो—ननु धर्मशास्त्रे एतत्प्रायश्चित्ताश्रवणान्न विवाहितपतिभजनं व्यभिचारः । स्त्रीमात्रस्यैवैतद्दोषव्याप्तत्वेन तज्जातानामधर्मोत्पन्नत्वेनाऽग्निहोत्रादिधर्मानधिकाराच्चतुर्वर्गोच्छेदप्रसङ्गश्च । तद्बोधकमानवैयर्थ्यं च स्यात् । भगवत्पुत्रानुद्दिश्याकथनाद् भगवत्पत्न्यतिरिक्तासु सतीपदप्रयोगश्च भागवतादावनुपपन्नः स्यादित्याशङ्क्य वर्णाश्रम

धर्माणां देहनिष्ठत्वेन तामधिकृत्य च धर्मशास्त्रस्य प्रवृत्तत्वेन दैहिकधर्म-निरूपकं तद्, न तु भगवद्धर्मनिरूपकम्। भिन्नाधिकारात्। अध्यासेन आत्मसात्कृतत्वाद्देहस्य तद्धर्मेषु स्वधर्मपदप्रयोगः। वस्तुतस्तु आत्मधर्मा एव स्वधर्माः स्वशब्दस्य तत्रैव शक्तेः। अत एवाविद्वदधिकारित्वं धर्मशास्त्रेषूच्यते। ब्रह्मविदां तत्रानधिकारो, भक्तौ तु मुख्योऽधि-कारश्च। तदुक्तमवतारहेतुनिर्णयप्रस्तावे, तथा परमहंसानां मुनी-नाममलात्मनाम् * भक्तियोगवितानार्थमिति, मुक्तोपसृप्यव्यपदे-शादिति तत्त्वसूत्रं च। तदर्थस्तु, मुक्तेषु जीवन्मुक्तेषूपसृप्यता भगवन्निकटगमनयोग्यता, तस्या उपदेशात्। इदं हि, यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः * तमेवैकं जानथा-ऽऽत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुरित्यत्र, अन्यवाग्वि-मोकः श्रावितः। स चोपक्रान्तसर्वविज्ञानविरुद्ध इत्याशङ्क्य निरा-कर्तुम्। अयमाशयः। तद्वेद्धव्यं सौम्य विद्धीत्यैकाग्र्येण तदेक-तानतां प्रतिज्ञाय तत्सिद्ध्यर्थं, धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्यु-पासानिशितं सन्दधीत * आयम्य तद्भावगतेन चेतसा लक्ष्यं तदे-वाक्षरं सौम्य विद्धीति शरधनुर्न्यायेन तामुक्त्वा, किमस्त्रं कः शर इत्याकाङ्क्षायां, प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते * अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदित्यनेन शरस्य यथा प्रवेशेन लक्ष्यनिखाततया लक्ष्यप्रचुरता, तथात्मनोऽपि तन्निखाततया तत्प्रचुरतेति तया ब्रह्मत्वेन ज्ञानं, लक्ष्यं सर्वगतं चैव शरो मे सर्व-तोमुखः * वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न संशय इति ब्रह्मस-काशात् पृथक्त्वेन ज्ञातुं वा जीवं लक्ष्ये ब्रह्मणि योजितुमुपासा-निशितत्वाधायकतद्भावगतचेतःसिद्ध्यर्थमन्यवाग्विमोकोऽत्रोच्यते। स च शरीराद्यध्यासराहित्य एव सिद्ध्यतीति तन्मुखेन मुक्तोप-सृप्यतोक्तरीतिकया गौण्या व्यपदिश्यते। तेन शरीराद्यध्यास-

विशिष्टं लिङ्गशरीरं न ब्रह्मणि योजनीयमिति बोधनायात्र वाग्विमोक उच्यते । तेन तु सर्वविधानाय लक्ष्यादीनां त्रयाणां सर्वग तत्वश्रावणादतो नैतत्कथनमुपक्रमविरोधायेति । प्रकृतमनुसरामः । प्रकृते च भक्तिमार्गमधिकृत्य सर्वोऽर्थो निर्णीयते । तत्र च भगवदतिरिक्तभजनस्य दोषत्वमेवेति सिद्धान्तः । अत एव आज्ञायैवं गुणान् दोषान्मयादिष्टानपि स्वकान् * सन्त्यज्य सर्वतः सर्वान्मां भजेत् स च सत्तम इत्यादिवाक्यैस्तत्त्यागपूर्वकं भजनमत्रोच्यते । अन्यत्रोक्तन्यायेनास्वधर्मस्यापि स्वधर्मत्वेनोक्त्या कापथ्यं मन्वानो व्यासो भक्तिशास्त्रं निरूपयन्, धर्मः प्रोज्झितकैतवोऽत्रेति प्रतिज्ञातवान् । एवं सति भक्तिमार्गीयविहितनिषिद्धाकथनं धर्मशास्त्रे युक्तमेव । भिन्नविषयत्वात् । वात्स्यायनीय इव धर्मशास्त्रीयतत्तदकथनम् । न हि तदार्षमिति धर्मशास्त्रं न तद्बाधकम् । न वा धर्मशास्त्रं बाधकमिति तद्विरुद्धोपदेशो न वात्स्यायनीये । कामरसनिरूपणे हि तत्प्रवृत्तम् । स च यादृशस्तादृशं न्यरूपयदिति न काप्यनुपपत्तिः । प्रकृतेऽपि भगवतोऽतिदुरापत्वेन स्वातन्त्र्येण स्थितौ स्त्रीणामुत्कटरागेण यथेच्छाचारान्नाशो भविष्यतीति भगवान् धर्ममार्गीयास्ताः कृत्वा विषयरागपूर्त्तिपूर्वकं तदुक्तनियमस्थाः कृतवान् । न ह्येतावता तासामव्यभिचारः । सहजभर्त्रतिरिक्तभजनात् । अत एव आद्यमहिष्या गीतम् । त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसाऽस्थिरक्तकृमिविट्कफपित्तवातम् * जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्रीति । अतस्तद्दुरापत्वेऽपि तदाशया तद्भजनमन्यभजनरहितं कुर्वद्भिरेव सर्वैः स्थेयमिति पुष्टिमार्गनिष्कर्षः । एतास्तु भगवदर्थमेव प्रकटिता इति सुष्टूक्तं, वस्तुतस्त्वित्यादि । अथवा, धर्मो द्विविधोऽन्तरङ्गो बहिरङ्गश्च । सोऽपि प्रत्येकं त्रिविधः । तथाहि । विहितत्वेन क्रियमाणो भग-

द्विषयकः श्रवणादिरन्तरङ्गतमो धर्मः । आत्मा वाऽरे द्रष्टव्य इत्यादिश्रुतेः । तस्माद्भारतेति स्मृतेश्च । योगादिसाधनैरात्मचिन्तनं तादृक्तरः । अयं हि परमो धर्मो यद्योगेनात्मदर्शनमिति स्मृतेः । ततस्तुच्छस्वर्गादिफलको विविधस्त्रीपुरुषाधिकारकपातिव्रत्यादिर्विविधदेवताव्रतादिः स्मार्तो बहिरङ्गतरः । ऐश्वर्यारोग्यादिफलकविविधदेवताग्रहादिभजनरूपः स्मार्त्तो बहिरङ्गतमः । तत्र पूर्वपूर्वाऽसम्भवे उत्तरोत्तरकर्त्तव्यता । प्रेमानन्तरं स्वव्यसनतः क्रियमाणः श्रवणादिर्न धर्मः । तल्लक्षणाभावात् । पूर्वोक्ते सर्वत्र प्रवृत्तिनिवृत्त्यो स्तत्तदधिकार एव प्रयोजकः । भगवान् मर्यादापुष्ट्योर्मध्ये यं जीवं यस्मिन्मार्गे मनुते तस्मिंस्तदेवाधिकाररूपं तत्तच्छास्त्रं च तत्तन्मार्गीयधर्मनिरूपकम् । पूर्वोक्ताधिकारवतां स्वस्वाधिकारिकधर्माकरणे त्वदोषः । अत एव पार्थस्य पुष्टावङ्गीकारान्मर्यादामार्गे निषिद्धस्यापि गुर्वादिहननस्याकरणे भगवाननिष्टं फलमाह, अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसीति । प्रकृतेऽप्यासां पुष्टावङ्गीकारान्न मर्यादामार्गीयधर्माधिकारः, किन्त्वविवाहेऽपि भगवत एव भजने । अत एव मर्यादाधर्मो, भर्तृशुश्रूषणं स्त्रीणां परो धर्मो ह्यमाययेत्यादिना भगवतोक्तो नैताभिरङ्गीकृतः । न ह्यनधिकारिहृदये धर्मः स्फुरति । एवं सति मर्यादामार्गीयो धर्म एतासां परधर्म इति विवाहितभजनमपि व्यभिचार एव । सहजभर्तृत्वेऽपि भगवतो, विवाहकरणं तु तादृशभक्तनिरोधार्थं तत्तद्रसानुभवार्थं मर्यादास्थापनेन लोकशिक्षार्थं च । आदित्यादीनां लीलार्थं भर्तृत्वेनाङ्गीकारात् तासां तासां तत्तत्पतिभजनमेव स्वधर्मः । भगवता तथैवाङ्गीकारान्न तु तत्र विवाहः प्रयोजकः । तद्विवाहस्य भगवल्लीलोपयोगित्वेन भगवद्विवाहतुल्यत्वादित्यलमधिकोक्त्येति समर्थयाञ्चक्रुः । अत एव स्मर्यते । त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति ॥

आस्तामियं दुर्लभा वार्त्ता । प्रकृतमेवोच्यते । तत्रेदं तत्त्वम् । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः * न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति ॥ यत् कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गौ मद्धाम कथञ्चिद्यदि वाञ्छति ॥ न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम। वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवमित्यादिवाक्यैर्ज्ञानवैराग्यरहितानामेव भक्तिकथनाद् भक्तेः कल्पतरुस्वभावत्वेनेतरसकलसाधनसाध्यसाधकत्वोक्तेश्च नेतरसाधनसापेक्षता भक्ताविति, भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् इति वाक्ये मुक्तिसाधनपूर्णानामपि भगवद्दाने प्राप्तिर्नान्यथेति निरूपणादऽनुग्रहेतरसाधनासाध्यत्वं मर्यादाभक्तावपीति, सैव हि सत्यादय इत्यधिकरणे। विशेषस्तु पूर्वोक्तोऽनुसन्धेयः । तथाचोक्त, येषां जीवानां मर्यादायामङ्गीकारस्तेषां साधनक्रमेणैव भगवत्प्राप्तिः । यथाऽसुराऽऽवेशिनामपि मुक्तिं ददतः स्वरूपं दृष्टवतोऽपि मुचुकुन्दस्य दोषवर्णनपूर्वकं तद्रहिताग्रिमजन्मनि स्वप्राप्तिकथनम् । येषां च पुष्टिमार्गे, तेषां केवलानुग्रहेणैव, न साधनापेक्षयेति सिद्धान्त इति । विशेषस्तु भक्तिहेतुग्रन्थाद् बोध्यः । तत्रानुग्रहो धर्मान्तरमेव न च फलदित्सैव सोऽस्तु । यस्यानुग्रहमिच्छामीति वाक्यविरोधात् । दित्सात्वे तस्येच्छाकर्मत्वायोगात् । एतेन परदुःखप्रहाणेच्छात्वमपि निरस्तम् । नाऽपि तदर्थको यत्नः । कृपयामि, न तु यते इति तदुत्तरं व्यवसायदर्शनात् । कृपया यते, दित्स इति प्रयोगदर्शनाच्च । नापि ज्ञानम् । दुःखं जानन्नपि दुष्टे न कृपयति, नास्य दुष्टस्य दुःखमिति जानन्न कृपयतीत्यादिप्रयोगात् । दृष्टत्वान्नादृष्टविशेषः । द्वेषादिवैलक्षण्याच्च न द्वेषादिः ।

तस्मात् स्वीकारफलदित्सादिप्रयोजकं धर्मान्तरमेव। शुद्धान्तःकरण-सहकृतयोगो वा साधनम् । यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् * एव योगरतं चेत आत्मानमविकारि यदिति वाक्यात्। श्रीभागवतमेव वा ।श्रद्धां भागवते शास्त्रे इति योगीश्वरवाक्यात्। एकादशोक्तसाधनानामप्यत्रैव सन्निवेशः।इममेवार्थं, बुद्धिहेतुप्रवृत्ति-राविशुद्धेरवघातवत्, तदङ्गानां चेति सूत्राभ्यां शाण्डिल्य आहेति दिक् ॥

इति श्रीविद्वन्मण्डन—गोकुलोत्सवाऽऽत्मजगोपेश्वरविरचिते भक्तिमार्तण्डे साधनप्रकरणं तृतीयं सपूर्णतामगमत् ॥३॥



## अथ फलप्रकरणं चतुर्थम् ॥ ४ ॥

अथ तस्याः फलं निरूच्यते । तत्रालौकिकसामर्थ्यं, सायुज्यं, सेवोपयोगिदेहो वैकुण्ठादिष्विति त्रिविधं दर्शितं श्रीमदाचार्यैः सेवाफलविवृतौ । तद् व्याचख्युः । अलौकिकसामर्थ्यं नाम परमाप्तिविवरणश्रुत्युक्तभगवत्स्वरूपानुभवे, प्रदीपवदावेश इति सूत्रोक्तरीतिकभगवदावेशनयोग्यतापारम्यात्मकस्य भगवतः पूर्णस्वरूपानन्दानुभव इति श्रीपुरुषोत्तमाः । तथैव श्रीदेवकीनन्दनाः । चाचागोपीशास्तु, अलौकिकभजनानन्दानुभवे स्वरूपयोग्यतेति, तेऽपि । तथा भगवता सह गानादिसामर्थ्यं मुख्यानामिवेति श्रीकल्याणरायाः । भगवद्विरहानुभवसामर्थ्यमिति श्रीमद्धरिधनचरणाः । एतच्च दानेन सिद्ध्यति । रुद्रादीनां च श्रुत्लेशादिश्रुतेः । कन्दर्पकोटिलावण्ये इत्यादिना श्रुतिभिः प्रार्थिते, दुर्लभो दुर्घटश्चेत्युपक्रम्य, व्रजे गोप्यो भविष्यथेति वाक्याच्च । सङ्कल्पो विदितः साध्व्य इत्युपक्रम्य, मयेमा रंस्यथ क्षपा इति वाक्याच्च । सायुज्यं, भक्त्या मामभिजानातीत्युक्तो भगवत्स्वरूपे लय इति श्रीपुरुषोत्तमाः । चाचागोपीशा अप्येवं, देवकीनन्दनाश्च । सह युनक्तीति सयुक्, सयुजो भावः सायुज्यं संयोगानुभवसामर्थ्यमिति श्रीहरिधनचरणाः । श्रीकल्यारायास्तु गोपानामिवेति विशेषमप्याहुः । नैकात्मतां मे इत्यारभ्य, गतिमण्वीं प्रयुङ्क्त इत्यन्तवाक्यात् । सेवोपयोगिदेहोऽक्षरात्मको देहेन्द्रियाऽसुहीनः पुरुषस्त्रीपशुपक्षिवृक्षाद्याकृतिसंस्थानविशेषः । को वामिहैत्य भगवत्परिचर्ययोच्चैरिति वाक्यात् । तयोः पातस्तु भगवदिच्छयेति तत्रैव निबन्धे स्फुटम् । एतत्फलत्रयं त्रिविधसेवायां यथायथं बोध्यम् । अत एव, प्रायो बताऽम्ब विहगा मुनय इत्यत्र मुनीनां पक्ष्यादिशरीर-

प्राप्त्या स्वाधिकारानुसारेण सेवा, तद्रसानुभवयोग्यता चेति निरूपितम् । सायुज्यालौकिकसामर्थ्ये संयोगविप्रयोगात्मके । सेवोपयोगिदेहस्तु, सम्पद्याविर्भावाधिकरणोक्तः । अक्षरात्मकस्य ज्ञानप्राप्यत्वादिति । एतच्चाक्षरधियामित्यधिकरणे स्फुटम् ॥

इदमनुसन्धेयम् । श्रीमद्धरिधनचरणैः, यादृशी सेवनेस्तत्र मुख्यां मानसीं सेवां संगृह्य तत्फलमुक्तम् । श्रीपुरुषोत्तमैस्तु तत्र तनुवित्तजसेवासहितप्रेमात्मकसेवां गृह्णद्भिस्तत्फलमुक्तम् । तदुक्तं भाष्यप्रकाशे चतुर्थाध्यायसमाप्तौ । उपासनायां मर्यादाभक्तिसाहित्ये तु वैकुण्ठादिलोके भगवत्सेवकत्वम् । तत्रापि भक्तेरुत्कर्षे तु भगवच्चरणे कौस्तुभादौ वा प्रवेशेन भगवत्सायुज्यम् । अनुग्रहविशेषेण पुष्टिभक्तौ तु, भक्त्या मामभिजानातीत्युक्तरीत्या स्वस्मिन् प्रवेश्य भूमविद्योक्तरीत्या पुनः पृथगाविर्भाव्य भजनानन्दानुभावने, सोऽश्नुत इति श्रुत्युक्तरीतिकं भोगं कारयतीति ॥

इदमत्राकूतम् । ब्रह्मविदाप्नोति परं, तदेषाभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति । अत्र सर्वकामोपभोगः फलत्वेन निरुक्तः । स एव, निष्प्रत्यूहो महान् भोगः प्रथमे विशते सदेत्युक्तम् । अत्रायं भावः । अश्नुत इति न, अशूङ् व्याप्ताविसस्य प्रयोगः । तथा सति ब्रह्मणा सहभूतान् कामान् व्याप्नोतीत्यर्थो भवत्यथवा ब्रह्मणा सहभूतः स जीवः कामान् व्याप्नोतीति, यद्वा ब्रह्मणा सह जीवः कामान् संयुनक्तीतीति । नाद्यः । कामवज्जीवकर्तृकव्यापनाक्रियाकर्मत्वस्य ब्रह्मणोऽतिमहत्त्वेनासम्भवात् । एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् * सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मन इति वाक्यात् । न द्वितीयः । व्यापनं च स्वाधीनीकरणात्मकत्वेन कामानां तथात्वस्या-

ऽपुरुषार्थरूपत्वाद्, भोगशेषत्वात्तेषां पूर्वोक्तपरमाप्तिव्याकृतिरूपत्वाच्चासद्विधानासङ्गत्यापत्तेः। अत एव ब्रह्मणा करणभूतेन सर्वान् कामान् सहाश्नुते युगपद् भुङ्क्ते इति योजनासिद्धोऽर्थोऽपि निरस्तः। नापि भोगस्य सुखसाक्षात्कारातिरिक्तोदासीनज्ञानात्मकोऽर्थः सम्भवति । असम्भवात् । साधनसाध्यभावव्याहतेश्च । एवं सति हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्त्तमानं यो वेद स ब्रह्मणा नित्याविकृतरूपेण विपश्चिता । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात् पश्यच्छब्दावयवस्य पच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः । तेन विविधभोगचतुरेण सह सर्वान् कामानश्नुतेऽश्नातीत्यर्थः सम्पद्यते । विकरणपदभेदौ, व्यत्ययो बहुलमिति छान्दससूत्रात् । अर्थस्य अलौकिकत्वज्ञापनायालौकिकः प्रयोगः । सहभावोक्त्या ब्रह्मणो गौणत्वं च । अत एव, अहं भक्तपराधीनः, वशे कुर्वन्ति मां भक्त्येत्यादिस्मृतिः । ननु यद्यन्तःस्थितोऽश्नुते तदा, स इति भोगस्वातन्त्र्यबोधकप्रथमाविभक्त्यनुपपत्तिः । ब्रह्मणि लये भेदाभावात् । यदि बहिर्भूत्वा, तदा दृश्यापत्त्या परप्राप्तेर्मुक्तित्वभङ्ग इत्युभयथाऽपि दोषादिदमपि विवरणं सन्दिग्धमितिचेन्न । ब्रह्मविद् ब्रह्मैव भवति, ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्या ब्रह्मणः सहैकीभावं प्राप्य आविर्भावो भवति भगवत्स्वरूपबलेन । तथाच श्रुतिः । तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण इत्याद्युपक्रम्य आत्मत आविर्भावतिरोभावावात्मतोऽन्नमिति। किञ्च, भोगोऽपि देहमन्तराऽनुपपद्यमानस्तमाक्षिपति । ननूक्तं पुनरावृत्तिर्बाधिकेति । उच्यते । यद्यपि, न स पुनरावर्त्तत इत्यत्र नेहेति विशेषो नश्रूयते तथापि पञ्चाग्निविद्यायाम् अक्षिपुरुषविद्यायां च

तेषामिह न पुनरावृत्तिरस्तीति इमं मानवमावर्त्तं नावर्त्तन्त इति च यथायथं श्रवणादस्मिँल्लौकिकप्रपञ्चे पुनरावृत्त्यभावमाह, न तु नित्यायां भगवल्लीलायाम् । तस्याः प्रपञ्चातीतत्वात् । लोकवत्तु लीलाकैवल्यमिति सूत्रात् । तदुक्तं व्यासचरणैः, सम्पद्याविर्भावः स्वेन शब्दादिति । ननु ब्रह्मसम्प्राप्तिरेव मुक्तिरिति पृथगाविर्भावे सति सृष्ट्यादाविव बन्ध एव सम्भावित इति चेन्न। उपक्रमे ब्रह्मविदाप्नोति परमिति परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय तद्विवृत्तिरेव सोऽश्नुत इत्यादिना क्रियते । तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्याशनस्य सिद्ध्यतीति तदाविर्भावस्य लौकिकत्वाभावात् । तदुक्तं, मुक्तः प्रतिज्ञानादिति सूत्रेण परस्य ब्रह्मणो दुर्ज्ञेयत्वात् कामोपभोगस्य गुणसाध्यत्वात् महद्ब्रह्मणेत्यत्र ब्रह्मपदं सगुणतत्परमतो न तस्य ब्रह्मरूपत्वमित्याशङ्का तु, आत्मा प्रकरणादिति सूत्रेणापास्ता । यतो ब्रह्मविदाप्नोति परमित्युपक्रम्य तत्पाठाद् गुणातीतस्यैवैतत्प्रकरणमिति । अविभागेन दृष्टत्वादिति सूत्रं तु ब्रह्मविदाप्नोति परमिति भिन्नं वाक्यम् ऋगिमन्नाऽतोऽनैकं प्रकरणमिति सगुणमेव ब्रह्मपदेनोच्यत, इत्याशङ्कामपाकरोति । यतो ब्रह्मविदिति वाक्यानन्तरं तत्पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्य एषर्गुक्तेति श्रुतिर्दृश्यते । तदेषाभ्युक्तेति । तेन पूर्ववाक्योक्तमर्थमधिकृत्य एषर्गुच्यत इति गुणातीतमेव तदत्र वाच्यमिति । किञ्च, सगुणनिर्गुणयोर्भेदोऽभेदो वा । नाद्यः । तात्त्विके तस्मिन्नप्रसिद्धान्तात् । अतात्त्विके तु उपाधेरसम्भवस्य विद्वन्मण्डनादावुपपादनात् । दिङ्मात्रमत्रापि प्रदर्श्यते । तथाहि । या तावदविद्या ब्रह्मोपाधिरुच्यते सा सादिरनादिर्वा । नाद्यः । त्वन्मत उपहितस्येश्वरत्वेन तस्याः सादित्वे ईश्वरस्यापि तथात्वापत्तौ सांख्यमतीयकार्येश्वरवादप्रसक्त्या वेदान्तसिद्धान्तभङ्गप्रसङ्गात् । नान्त्यः ।

अनादिभावस्यानन्तत्वनियमादनिर्मोक्षप्रसङ्गेन जीवापेक्षयाऽपीश्वरस्य जघन्यत्वापातात् । नच जघन्यत्वप्रयोजकनियम्यत्वादेरभावान्न तथेति वाच्यम् । तथापि मुमुक्षूणा तस्यानुपास्यत्वापत्तेः । नचेष्टापत्तिः कर्त्तुं शक्या । तथा सतीक्षत्यधिकरणस्थानां, गौणश्चेन्नात्मशब्दात्, तन्निष्ठस्य मोक्षोपदेशात्, हेयत्वावचनाच्चेति हेतूनां विरोधात् । अथानादिसान्तत्वमिष्यते तदापि तत्र सर्वज्ञताङ्गीकारस्यावश्यकत्वात् तस्य च हिरण्यगर्भादिगुरुत्वेन सर्ववेदवेद्यत्वात् तदपेक्षयोत्कृष्टाधिकारिणोऽन्यस्याभावाद्वाक्यादपरोक्षत्वे बोधिते ईश्वरस्य ब्रह्मसाक्षात्कारावश्यकत्वाज्जन्मुक्त्यापत्तौ प्रपञ्चाभावप्रसक्तेः । तस्य मुक्त्यभावेऽन्यस्य ततो जघन्याद्वाक्याऽपरोक्षहानिप्रसङ्गोऽन्यमुक्त्यङ्गीकारे च तेभ्यो जघन्यत्वेश्वरस्य स्यात् । तथा सति पूर्वोक्तहेतुतादवस्थ्यं च । किञ्च मा जीवगता, ब्रह्मगता वा, यत्कल्पिता विशेषाः । नाद्यः । तस्या ब्रह्मगतधर्मकल्पने सामर्थ्याभावात् । शुद्धस्य ब्रह्मणो मनोवागविषयत्वेनाऽधिष्ठानाज्ञानेन जीवस्य तस्याः सम्बन्धस्याशक्यवचनत्वात् । सम्बन्धाभावे कल्पनाया अयोगात् । ननु नाश्रयज्ञानं मिथ्याज्ञाने कारणम् । आकाशेऽपि तलमलिनताध्यासदर्शनात् । तथाच भाष्यं— न चायमस्ति नियमः, पुरोवस्थित एव विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्तीतिचेन्नैवम् । नीलं नभोऽस्तीत्यबाधितप्रत्ययात् । यद् धूम्रं तद्वायोर्यन्नीलं तन्नभस इति श्रुतेः । तत्र बहवः । नाकाशस्य रूपत्वे मानम् । तथाहि । न तावत् प्रत्यक्षम् । आकाशं तद्रूपं वा पश्यामीत्यप्रत्ययात् । पूर्वोक्तप्रतीतेर्भ्रान्तत्वात् । ननु रूपवतः प्रत्यक्षविषयता न नियता । परमाणौ व्यभिचारादितिचेन्न । महत्कारिमहत्त्वाभावात् । नापि, वायुभिन्नत्वे सति महत्त्वात् पृथिवी-

वादित्यनुमानेन रूपसिद्धिः । द्रव्यत्वस्योपाधित्वात् । नापि, क्रियादिरहितत्वे सति भूतत्वाद्, यन्नैवं तन्नैवं, कालवदित्यनेन सिद्धिः । द्रव्यारम्भकत्वस्योपाधित्वात् । आद्यक्षणीयघटादौ व्यभिचाराच्च । बहिरिन्द्रियग्राह्यविशेषगुणवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मवत्त्वस्य कालादीतरद्रव्यत्वस्य वा भूतत्वस्य तत्रापि सत्त्वात् । किञ्च, आकाशो यदि रूपवान् स्याद्, बहिरिन्द्रियग्राह्यो वा स्यात्, स्पर्शवान् वा स्यात्, पृथिव्यादित्रयं वा स्यादिति बाधकतर्कपराहतमाकाशस्य रूपवत्त्वमित्याहुः । तदिदं साहित्यसर्वस्वकारः— नेदमुचितम् । नीलं नभः पश्यामीति निःशङ्कं सार्वजनीनप्रत्ययात् । न चाऽसौ भ्रमः । तत्कारणीभूतदोषस्य विकल्पपराहतेः । तथाहि । किमसौ विषयदोषः सादृश्यनिबन्धनः, इदं रजतमितिवत् ? उत करणदोषःपित्तादिनिबन्धनः, शङ्खः पीत इतिवत् । नाद्यः । असम्भवात् ॥ विषयगतदोषजन्यभ्रमत्वावच्छिन्नं प्रति धर्मिप्रमोषसहकृतारोपस्य तन्त्रत्वात् । प्रकृते तदभावात् । न द्वितीयः । अस्य प्रत्ययस्य सार्वजनीनत्वात् । युगपत् सर्वजनकरणदोषस्य वक्तुमशक्यत्वात् । नचैन्द्रजालिकमायायां यथा वस्तुग्रहणप्रतिबन्धकः करणगतो विषयगतो वा दोषः सार्वजनीनस्तथात्रेति वाच्यम् । तत्रैन्द्रजालिकस्य तत्परिपन्थिमन्त्रादिवतस्तस्य च यथावस्तुग्रहणदर्शनेन तस्याऽसार्वजनीनत्वनिश्चयात् । किञ्च, सर्वेषां ख्यातिवादिनां मते आकाशस्यातीन्द्रियतायाः संमतत्वेन तदधिकरणकभ्रमायोगात् । अतो बाधकाभावात् सा प्रतीतिः प्रमैव । सामीप्ये नैल्याभावप्रत्यय एव बाधक इतिचेन्न । व्यापकस्याकाशस्य दैशिकपरत्वापरत्वात्मकदूरत्वसामीप्ययोरनधिकरणत्वात् । पुरुषसंसृष्टदेशविवक्षया सामीप्यप्रत्यय इतिचेत् तवाकाशस्यातीन्द्रियत्वेन सामीप्याविषयत्वात् । नयनसंसृष्टाञ्जनवत्, सागरनीलिमवच्च

समीपे तद्ग्रहणेऽप्यदोषात् ॥ तस्माददुष्ट आकाशस्य प्रत्यक्षतापक्षः। एवञ्च पूर्वोक्तानुमानमपि मानम् । नच द्रवत्वमुपाधिः । तस्य प्रलये पृथ्वीतेजःपरमाण्वोः साध्याव्यापकत्वात् । घटवह्न्यादावपि तथात्वाच्च । घटादौ द्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वेनेश्वरेऽपि द्वेषापत्तिः। किञ्च, व्याप्यधर्मस्येव विशेषेण व्यापकधर्मस्यापि नियामकत्वापत्तिः । तदिष्टत्वे, गन्धवद्वृत्तिपृथिवीत्वव्यापकजातिमत्त्वेनाकाशादावपि गन्धादिसाधनापत्तिः। नचैवं घटादावसत्त्वेन द्रवत्वं पृथिवीतेजसोर्भागासिद्धं स्यादिति वाच्यम् । इष्टापत्तेः । तस्यालक्ष्यत्वात् । यथोपलम्भतन्नियमस्य युक्तत्वादिति । यद्यप्यत्राकाशभिन्नत्वमुपाधिस्तथापि साध्याभावोपाध्यभावयोर्वायौ व्यभिचारितत्वेन पक्षे साधनाव्यापकत्वस्यादूषकत्वेन च न तत्सम्भवः। एतेन द्रवत्वाभावस्य रूपाभावसाहचर्यादुपाधिदृढीकरणमुत्क्षिप्तम् । वस्तुतस्तु द्रवत्वं जल एव, न च घृततैलसुवर्णादौ । वह्न्यादिसंसर्गेण तदुपलब्धिस्तु हिमकरकादाविव पार्थिवभागबाहुल्याद् अभिव्यञ्जकसंयोगाद्वेति । अपिच, द्वितीयानुमाने द्रव्यारम्भकत्वोपाधिस्तु रूपवदन्त्यावयविनि साध्याव्यापकत्वान्निरस्तः। आद्यक्षणावच्छिन्ने च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वरूपभूतत्वस्य हेतोरभावान्न व्यभिचारोऽपि । निरुक्तभूतत्वयोराद्यविवक्षायां, तद्वद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्मस्य भूतत्वस्येव मूर्त्तत्वस्य मनसि, द्वितीयविवक्षायां भाट्टानां शब्दे वेदान्तिनामज्ञानेऽस्मन्मते तमस्यतिव्याप्तेः । योऽपि यदि रूपवान्न स्यात् पृथिव्यादित्रयं स्यादित्यादिरुत्प्रेक्षितस्तर्कः सोऽपि दुस्तर्क एव।वायुभिन्नत्वे सति निष्क्रियत्वोपाधिग्रासात् । यदि रूपवान्न स्याद्वायुभिन्नत्वे सति बहिरिन्द्रियग्राह्यविशेषगुणवान्न स्यादिति प्रतितर्कपराहतेश्च । नच स्पर्शवत्त्वमुपाधिः। प्रभायां साध्याव्या-

पकत्वात् । तत्राप्यनुद्भूतः स्पर्शोऽस्तीतिचेन्न । मानाभावात् । स्पर्शवद्वृत्तित्वादिविवक्षायाः प्रागुक्तरीत्याऽपक्षिप्तत्वात् । रूपवत्त्वेन तत्साधने त्वग्ग्राह्यत्वस्योपाधित्वात् । अपिच रूपं पृथिव्यादित्रयाकाशेतरवृत्त्यसन्ताभावप्रतियोगि । वायुस्पर्शेतरबहिरिन्द्रियग्राह्यविशेषगुणत्वात् । गन्धादिवत् । शब्दो रूपसमानाधिकरणः । तादृशविशेषगुणत्वात् । रसादिवत् । द्रवत्वसामानाधिकरण्यमुपाधिरितिचेत् । विषमव्यापकत्वात् । प्रलयकालीनतेजःपरमाणुषु साध्याव्यापकत्वाच्चेति । नच विभुत्वनिःस्पर्शत्वाभ्यां सत्प्रतिपक्ष इति वाच्यम् । आद्ये स्पर्शवत्त्वस्य द्वितीये वेगवत्त्वस्योपाधित्वात् । न चोपाधेः सत्प्रतिपक्षोत्थापकतया सत्प्रतिपक्षे न दूषकत्वमिति वाच्यम् । उपाधेर्हेत्वाभासत्रितयोत्थापकतया निर्णयात् । उपाधेर्व्यतिरेकोपसंहारे सत्प्रतिपक्षोत्थापकत्वेन प्रसज्यतां दूषकत्वम् । प्रकृते तदभावेन तस्यादूषकत्वाच्च । एतेनाकाशस्य रूपवत्त्वे सिद्धे प्रत्यक्षसिद्धिरप्रत्यूहैव । स्यादेतत् । चक्षुरिन्द्रियजन्यद्रव्यसाक्षात्त्वावच्छिन्ने महत्त्वसमानाधिकरणरूपवत्त्वस्य कारणत्वाद् वियति च प्रत्यक्षपरिपन्थिनः परममहत्त्वस्य सत्त्वात् कथं तत्प्रत्यक्षमिति । उच्यते । लाघवेनाऽणुपरिमाणेतरपरिमाणसमानाधिकरणरूपत्वस्यैव प्रयोजकत्वात् । पक्षी चलति, नेह पक्षीत्यादिप्रत्ययानामपि वियत्प्रत्यक्षसाधकत्वमुपपद्यते । आलोकमण्डलविषयत्वे तु तदपगमेऽपि तथा प्रत्ययानापत्तिश्च । इहेति निर्देशानुपपत्तिश्च । तद्भूदेशोर्ध्वभागानुगमनप्रत्ययस्य देशविषयत्वापादनं प्रत्यभिज्ञानिर्वहणमेव । तदुपेक्षितमित्यलं विस्तरेणेत्येवमाकाशस्य रूपवत्त्वं साधयन् दूषयति स्म ॥ सिद्धान्ते त्वेतावान् विशेषः । नाकाशे रूपम् । उपरि नीलं पश्यन् आकाशं पश्यामीत्येव प्रत्ययान्नीलं नभः पश्यामीत्यत्रापि न गुणित्वेन नभसो भा-

नम् । गुणत्वेन नीलमत्त्वे मानाभावात् । घटादौ पाकादिना रूप-परावर्त्तनात्तन्निष्ठनीलादेर्गुणत्वनिश्चयेन प्रकृते वैलक्षण्यात् । नच वायुभिन्नत्वे सति महत्त्वात् पृथिवीवदित्याद्यनुमानेन तत्सिद्धिः । नीरूपः । परममहत्त्वात् । आत्मवदिति प्रत्यनुमानेन सत्प्रतिपक्ष-त्वात् । नाऽपि वायुभिन्नत्वे सति बहिरिन्द्रियग्राह्यविशेषगुणत्वा-दित्यनेन । तत्र स्पर्शवत्त्वस्योपाधित्वात् । नच तस्य प्रभाया सा-ध्याव्यापकत्वमिति वाच्यम् । तस्या गुणत्वेन रूपवत्त्वाभावाद् अदोषात् । पृथिव्यादित्रयभिन्नत्वादित्यनेन सत्प्रतिपक्षत्वाच्च । न-चात्र वायुभिन्नत्वे सति निष्क्रियत्वमुपाधिरिति वाच्यम् । तस्य मनसि साध्याव्यापकत्वेनानुपाधित्वात् । अतः पुराणादौ तेजोवि-शेषगुणत्वेनैव रूपस्य निरूपणादाकाशे तदुपगमो न प्रामाणिकः । नच, यद् धूम्रं तद्वायोर्यन्नीलं तन्नभस इति श्रुतिसिद्धत्वान्न तथेति वाच्यम् । तस्यास्तात्तद्देवतारूपपरत्वेनाप्युपपत्तेः । अन्यथा वाया-वपि धूम्रवर्णापत्तेः । नच खाण्डकाक्राण्डगोक्षाभमिति दृष्टिलक्षणेषु ज्योतिर्विवचनान्नैवमिति वाच्यम् । यत्र कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति * सिद्धिं तत्र विजानीयात्तस्मिन् स्वप्ननिदर्शन इति श्रुत्या स्वप्नस्य सिद्धिसूचकत्वेऽपि वचनोपपत्तेः । तस्मादाकाशरूपप्रती-तिर्भ्रान्तैव । नचोक्तरीत्या भ्रमहेतोर्निर्वक्तुमशक्यत्वान्नेदं साम्प्र-तमिति वाच्यम् । रूपवद्द्रव्यग्राहकस्य चक्षुषो मध्ये रूप च द्रव्याभावेन दूरगमने आकाशे नीलमिव दृश्यते । चक्षुरसामर्थ्य-दोषस्यैव हेतुत्वात् । नच तत्र रूपवतां सूर्यकिरणानामेव सत्त्वात् कथं रूपवद्द्रव्याभाव इति वाच्यम् । तेषां विरलत्वेनायोग्यतया तत्सत्ताया अप्यभावकल्पत्वात् । अन्यथा छायायां साचि तिष्ठ-तां भित्त्याद्यसंलग्नानामपि तेषां दर्शनप्रसङ्गात् । नच सार्वजनीन-त्वान्नायं भ्रम इति वाच्यम् । देहात्मभ्रमवदुपपत्तेः । योगिनां

तदभावाद्सार्वजनीनः स इतिचेत् । तुल्यम् । कपिलादीनामेव तथा वचनात् । एतेनैवाग्रे बाधाभावोऽपि प्रत्युक्तः । नन्वेवं सति सामीप्ये नीलभ्रमापत्तिरितिचेन्न । दूरत्वस्यापि सहकारित्वात् । नच विभौ दूरत्वमनुपपन्नमिति वाच्यम् । तद् दूरे तदन्तिके इति श्रुतौ विभुन्यपि ब्रह्मणि तदङ्गीकारात्तत्राप्युपपत्तेः । प्रदेश-दूरत्वस्य शक्यवचनत्वाच्च । किञ्च । गन्धर्वनगरवदाकाशे ता-दृशवस्तुसामर्थ्येन तस्याप्यैन्द्रियकत्वात् । अन्यथा कालवदवकाश-स्याप्यप्रत्ययापत्तेः । ननु वस्तुसामर्थ्यात् भ्रमैव कुतो नाङ्गी-क्रियत इतिचेत्, पुराणादौ रूपानुक्तेरिति वदामः । तर्हि अवकाश-प्रत्ययोऽपि भ्रमोऽस्त्विति चेन्न । बहिरन्तर्व्यवहारविषयत्वस्य भूतानां छिद्रदातृत्वस्य च शास्त्रेणैवोक्तत्वात् । तस्माद्वस्तुसामर्थ्य-जन्यत्वाविशेषेऽपि आकाशे नीलरूपं प्रत्येमीत्येव प्रतीतिर्भ्रान्ता, न तु नीलाभिन्नमाकाशं पश्यामि, आकाशं च पश्यामीति । एतेन आकाशे सर्वदा सूक्ष्मनीलमेव सत्त्वमङ्गीकुर्वन्तोऽपि निरस्ता ज्ञेयाः । नचाकाशस्य द्रव्यत्वहानिः । इष्टापत्तेः । तेनैतत् सिद्धम् । चक्षुः-सामर्थ्येनाकाशं न गृह्णाति, आकाशमेव तु स्वसामर्थ्येन स्वात्मानं ग्राहयति । गन्धर्वनगरवत् पिशाचवच्चेति दिक् । एतेनैवाकाश-प्रतिबिम्बतत्प्रतीती अपि व्याख्याते ज्ञेये । प्रकृतमनुसरामः । अथ ज्ञानिजीवानां ब्रह्मद्रष्टृत्वाद् अविद्यायाः कल्पकत्वमितिचेन्न । यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः *-इति स्मृतेर्द्रष्टृषु तस्या अयोगात् । ज्ञाने सति अनाशे पुनर्नाशायोगादनिर्मोक्षप्रसङ्गाच्च । अविद्यया ब्रह्मणि विशेषकल्पनायां दृश्यत्वं, दृश्यत्वे च सत्यधिष्ठान-ज्ञाने सति तत्कल्पनमित्यन्योन्याश्रयेण तस्याः कल्पकत्वायोगा-च्च । निर्विशेषविषयकदर्शनस्याङ्गीकारे च दृश्यत्वधर्मसिद्धेर्निर्द्धर्म-कत्वसिद्धान्तव्याघातोऽनङ्गीकारे च तन्निरूपकाणां ब्रह्म वेद

अस्यैव भवतीत्यादीनां व्याकोप इति च । न द्वितीयः । अनादिभावेत्यादिनैव दत्तोत्तरत्वात् । किञ्च, सा सती, असती, सदसती, सदसद्विलक्षणा वा । नाद्यः । दत्तोत्तरत्वात् । न द्वितीयः। कल्पकत्वायोगात् । खपुष्पवत् । न तृतीयः । तथा सति शुक्तिरजतवत् कल्पितैव वाच्येति तस्या एव कल्पकायोगादसम्भवात् । ब्रह्मणो निर्विशेषत्वात्तदानीं जीवानामप्यभावात् । तादृश्या एवाऽनादित्वे पूर्वोक्तदूषणापत्तेः। अथानादिसान्तत्वे न कश्चिद्दोष इति चेद्विभाव्यते । तदाऽप्यसङ्गतम् । जीवगतब्रह्मगतत्वविचारेण विकल्पासहत्वात् । दत्तोत्तरत्वाच्च । न तुरीयः । तथा सति ब्रह्माऽनतिरेकाङ्गीकारे, अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत इति स्मृतेरुक्तदूषणग्रासाच्च । श्रुतौ विशेषनिरूपणावसरे क्वापि तदऽनुक्तेश्च । अतोऽयमुपाधिपक्षो न सङ्गतः। अथ मायाशबलितं ब्रह्मासीदितिश्रुतिस्तु मायाया भगवच्छक्तित्वेन तत्संसृष्टरूपबोधिका। जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतिरप्यविरुद्धा । ब्रह्म साकारमेव । माया च प्रथमकार्यरूपा सत्यैव। तया योंऽशोऽवच्छिद्यते तस्यां वा यः प्रतिबिम्बते स कार्येश्वर इति सिद्धान्तात्। प्रतिपादितं चैतन्निबन्धावरणभङ्गप्रहस्ताद्वाविति न वितन्यते । नच, यद्वाचानभ्युदितं येन वागभ्युद्यते * तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यनेनोपास्यस्याऽब्रह्मत्वकथनादौपाधिको भेदः श्रुत्यर्थोपपत्तिसिद्धः । यद्युपास्यस्याब्रह्मत्वमभिप्रेयात्तदा पुनरिदङ्कारं न ब्रूयात्, नेदं यदुपासत इत्येतावतैवाब्रह्मसिद्धिः । तथाचायमर्थः । यद्वागाद्यगम्यं तत्प्रेरयितृ विदिताविदितेतरत्तदेव ब्रह्म विद्धि, नेदमतादृशं प्रत्यङ्मात्रं न विद्धि। मनआदिप्रेरकत्वे विदिताविदितेतरद् अपरं ब्रह्म, न त्वेतावदेव प्रेर्यत्वात्। तर्हि कथं तस्य वेदनमत आह । यदिदं श्रुति-

प्रसिद्धम् । उपासते । वेदैरुपासका इति वाक्यशेषः । तथाचो-पास्यत्वेन श्रुतौ सिद्धत्वात् तथा तद्वेदनमिति भावः । उपासना आवृत्तिः । सा च कीर्त्तनादेरिति न भक्तिमात्रप्राप्यत्वविरोधः । ब्रह्मणो भक्तिमात्रविषयत्वादुपास्तिविषयस्य वा ब्रह्मत्वं निषिद्धय-तोविदिताविदितेतरत्वं चातिरिक्तश्रुत्यैव सिद्धमिति । एतेन परोक्तं व्याख्यानमपि परास्तम् । अरूपवत्सूत्रे च रूपवद्विलक्षणतयैव बो-धनेनान्यथा तद्वैयर्थ्येन चोपाधिपक्षानुपष्टम्भात् । प्रकृतैतावत्सूत्रे-ऽपि प्रकृतं यदेतावत्त्वमिति व्याख्याने प्रकृतैतावत्पदयोरन्यतरेणैव विषयवाक्योक्तमूर्तामूर्तलक्षणरूपार्थमात्रेरेकतरवैयर्थ्यात् । तत्राप्र-कृते ब्रह्मणि प्रकृतस्य वा ब्रह्मणो मूर्तामूर्तमात्रतानिषेधस्यैव सूत्रकाराऽऽशयगोचरत्वादथात आदेशो नेति नेतीत्यत्रापि इति-शब्दस्य प्रकारवाचित्वेन पूर्वस्य नेतीत्येतस्य कार्यनिषेधपरतायाः, द्वितीयस्य तस्यैतावत्तानिषेधपरतायाश्च, न ह्यस्मादिति नेत्यन्यत् परमस्तीति तद्व्याख्याश्रुत्या बोधनात् कार्येऽपि कारणमात्रता-निषेधयोरेव स्फूर्त्तेरुपादेयकार्यस्योपादानात्मकत्वेन मूर्तामूर्तयोर्भ-गवद्रूपत्वाप्रतिषेधाच्च ॥

ननु मास्त्वेवमुपाधिपक्षसिद्धिः । प्रकारान्तरेणैव भवित्री । तथाहि । महिमनिरूपका वेदान्ता ब्रह्मस्वरूपसापेक्षत्वात्तदुपजीवका बहिरङ्गाः । स्वरूपनिरूपकास्तु तेषामुपजीव्या अन्तरङ्गाः । तथा पूर्वतन्त्रे उत्पत्तिशिष्टपदार्थो यागस्वरूपघटक इति तद्बोधकवा-क्यमुत्पन्नशिष्टपदार्थबोधकेन न बाध्यते । अपि तूत्पत्तिवाक्येनैवे-तरद् बाध्यते । तथात्रापि स्वरूपपरैर्निर्विशेषवाक्यैर्धर्माकारादि-निरूपकाणि बाधिष्यन्ते । ततो वा मानानि औपाधिके पर्यवसास्य-न्ति । उत्तरतन्त्रे पूर्वतन्त्रोक्तहेतूनामभ्यासादीनामादरेणैव साधने-ऽप्यदोषादिति चेत् । उच्यते । स्यादेवं यदि महिमनिरूपका धर्म-

मात्रं निरूपयेयुर्न स्वरूपम् । न त्वेवम् । किन्तु यथा अस्थूलादि-वाक्यानि धर्मनिषेधमुखेन स्वरूपं निरूपयन्ति, तथा विश्वत-श्चक्षुरादीनि विधिमुखेन । अत उभयेषां स्वरूपपरत्वान्न पूर्वोक्त-न्यायसञ्चारः । कश्चित्तु अस्थूलादिवाक्ये नञः क्रियान्वयाभावात् पर्युदास एवेति । तेन सदृशग्रहणात्, समो मशकेन समो नागेनेति श्रुत्यन्तराच्च अत्रापि सर्वाकारनिरूपणाद् वैफल्यवती इत्येवेयं विरोधाभावचिन्तेत्याह ॥ अन्यस्तु, नात्र पर्युदासः शक्यवचनः । असङ्गमित्यत्रानन्वयात् । अचक्षुष्कमिति कप्रत्ययविरोधात् । यथा-सम्भवमुभयस्वीकारे प्रायपाठविरोधाच्चेति न पर्युदास इत्याह । नेदम् । असङ्गमित्यत्र सङ्गभिन्नस्य सङ्गसदृशस्य प्रदेशाद्वयस्वरूप-सम्बन्धस्य सत्त्वेन तद्रूपताबोधनेऽन्वयसम्भवात् स्वार्थे कप्रत्यय-स्यापि सम्भवात् पर्युदासाबाधात् । किन्तु, स वै न देवासुरमर्त्य-तिर्यङ् न स्त्री न षण्ढो न पुमान् जन्तुः * नाऽयं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेष इत्यादिषु पुराणस्थोपबृंहणेषु निषेधशेषत्वकथनात्तदनुरोधेनाऽत्र प्रसज्यप्रतिषेधस्यैवाङ्गीकार्य-त्वाद् युक्ता विरोधाभावचिन्तेति । नन्वेवं सति श्रुत्युक्ताणुत्वादी-नामपि निषेधान्मात्र जडजीवधर्ममात्रनिषेध इति सिद्धम् । तथाच विरोधः स्वाश्रयं भेत्स्यतीति धर्माः सोपाधिक एव पर्यवसास्य-न्तीतिचेत् । ब्रह्म श्रुत्येकसमधिगम्यम् । तत्र च, तदेजति तन्नैजति तद् दूरे तदन्तिके, आसीनो दूरं व्रजति शयानो याति सर्वतः, अणोरणीयान् महतो महीयान्, विश्वतश्चक्षुः, अचक्षुष्कमश्रोत्र-मित्यादिभिर्विरुद्धनानाधर्मा एकस्मिन्नेव ब्रह्मणि प्रतिपाद्यन्त इति तथैव मन्तव्यम् । नचापवादार्थं धर्मारोपः शक्यवचनः । विनिगमका-ऽभावात् । अपोद्यानामविरोधे विरोधे वा विशेषाभावात् सूत्रेषु सविशेषनिरूपकश्रुतीनां परस्पराविरोधचिन्तनस्याप्रयोजनत्वापाता-

दतो विरोध एव नास्ति । धर्मिग्राहकमानसिद्धत्वात् । अन्तर्यामिब्राह्मणे, यः पृथिव्यां तिष्ठन् यः पृथ्वीमन्तर इत्यादिभिस्तदन्तःस्थितत्वतदन्तर्व्यापकत्वयोर्वैश्वानरविद्यायां प्रादेशमात्रत्वाऽभिविमानत्वयोः श्रावणाच्चान हि विरोध उभयं भवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां विवादानवसर इति श्रीभागवतषष्ठस्कन्धवाक्याच्च लोकविरुद्धयोरप्येकैकप्रतियोगिकनिमित्तत्वोपादानत्वयोरेकस्मिन्नेव शबले श्रुतिबलेन भवताभ्युपगमाच्च । किञ्चास्थूलादिश्रुतयो लौकिकधर्मानेव निषेधन्ति । न त्वलौकिकान् । अणोरणीयानित्यादिश्रुतिभिरलौकिकाणुत्वादिदर्शनेन तथावधारणात् । यः सर्वज्ञः सर्वशक्तिः, यतो वा इमानि भूतानि जायन्ते, सर्वस्य वशी सर्वस्येशानः, एको वशी सर्वगः कृष्ण ईड्यः । विश्वतश्चक्षुरुत विश्वतो मुखः, सर्वकामः सर्वगन्धइत्यादिश्रुत्युक्ता अलौकिका नित्या धर्माः परमात्मनि विराजन्त एव । प्राकृतधर्माणामेव वेदे निषेधः । सर्वथा निर्धर्मकत्वं नोररीकार्यम् । तथा सति व्यापकत्वस्याप्यनङ्गीकारापत्त्या ब्रह्मत्वस्यैव हानिः । बृहत्त्वाद् बृंहणात्वाच्च ब्रह्मेति श्रुतिव्याकोपात् । नच व्यापकत्वं स्वरूपानतिरिक्तो धर्म इत्यस्तु तदङ्गीकार इति वाच्यम् । धर्मत्वव्याहतेः । प्रकाशाश्रयन्यायेन व्यापकत्वस्वीकारे तु तयैव सरण्या कर्तृत्वादीनप्यङ्गीकुर्वन्तु । नच कर्तृत्वस्य कार्यसापेक्षतया समकक्षत्वादतो निषेधानां विशेषपरत्वं न सामान्यपरतेति ध्येयम् । देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामिति सप्तमस्कन्धवाक्ये लौकिकदेहेन्द्रियादीनां निषेधेन निषेधस्य विशेषपरतायाः व्यासचरणैः प्रदर्शितत्वाच्च । न हीह वाक्ये सामान्यनिषेध एवास्तीति वाच्यम् । सर्वे चतुर्बाहवउन्मिषन्मणिप्रवेकनिष्का-

ऽऽभरणाः सुवर्चस इति वाक्यविरोधात् । अत एव, अनामागोत्रमजरममरमित्याद्युपनिषत्सु, अनामरूपश्चिन्मात्रः सोऽव्यात्मा सदसत्पर इति पुराणादिवाक्येषु नामनिषेधोऽप्यस्मदादिनामतुल्यतां नामसु वारयति, न तु सर्वथा नामनिषेधः । अन्यथा धर्मविधायकनिषेधकवेदान्तानामनवबोधकतापातः । आत्मब्रह्मेत्यादिपदानामतन्नामत्वे बोधनाक्षमत्वात् । अन्यच्च, अस्थूलादिवाक्योदितानां स्थूलत्वादिप्रतियोगिकानामभावानां ब्रह्मणि सत्तया परमते द्वैतापातः । नचाभावानामधिकरणात्मकतया नाद्वैतहानिरिति वाच्यम् । शुद्धस्य भावपदार्थस्य ब्रह्मणोऽभावेन सहैक्याङ्गीकारेऽनेकनिगमव्याकोपात् । किं तद् ब्रह्मेत्याकाङ्क्षायां निखिलाभावरूपं ब्रह्मेत्युक्तेरभावपदार्थत्वापत्तेः । किञ्चाभावस्याधिकरणात्मकताऽङ्गीकारे घटाभाववति भूतले घटात्यन्ताभावप्रतीतिरधिकरणस्य भूतलस्य विद्यमानत्वाद् भूतले घटाभाव इतिवद् भूतले भूतलमिति प्रयोगापत्तिश्चेत्यादितार्किकनयसिद्धदूषणपुञ्जात् अधिकरणाभेदोऽभावस्येति तत्कृतं द्वैतं दुर्वारमिति दिक् । अपरं च, भूतले घटो नास्तीति प्रत्ययसाक्षिकः पदार्थविशेषोऽभावः प्रतियोग्यसत्तारूपस्तथा प्रकृते श्रौतस्थूलत्वाद्यभावस्तदभेदे ब्रह्मणि स्वीकृते सत्तारूपत्वापायात् सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिव्याकोपः । अतो नाधिकरणात्मकताऽभावस्य । एवञ्च तत्कृतद्वैतापत्तिः सिद्धैव । नच स्थूलत्वादिप्रतियोगिकाभावानां मिथ्यात्वाङ्गीकारे द्वैतनिवृत्त्या सर्वं सुस्थमिति वाच्यम् । धर्मतदभावप्रतिपादिकानां श्रुतीनां मिथ्यार्थप्रतिपादकतया समबलत्वेन भवदभिमतगुणाभावप्रतिपादकश्रुतिनिष्ठोपजीव्यत्वबाधात् सिद्धान्तभङ्गापत्तेः । अतः श्रुत्युक्तधर्माभावो नाऽऽर्यमनोरोचक इतीति । यद्वा, प्राकृतधर्माभाव एव अस्थूलमनण्वह्रस्वमित्याद्युपनिषदां विषय इति ज्ञेयम् । सिद्धान्ते तु

प्राकृतधर्माभावस्य मिथ्यात्वाङ्गीकारे न किञ्चिद् बाधकम्। न च प्राकृतधर्माणामप्राप्ततया तन्निषेधोऽनुपपन्नः। लोकप्रतीतत्वेन प्राप्तत्वात्। असन्नेव स भवतीत्यादिश्रुतौ लोकप्रतीतस्यैव ब्रह्मासत्त्ववेदनस्य निन्दामुखेन निषेधात्। अत एव, आनन्दो अजरो अमृतः, अनामागोत्रमजरमभयममृतमित्यादिश्रुतौ लोकप्रतीतजरादेर्ब्रह्मणि निषेधः। न तु श्रुत्यन्तरप्राप्तस्य। न हि काऽपि श्रुतिर्ब्रह्मणि जरां विधत्ते। अतः श्रुत्यन्तराप्राप्तस्य लोकप्रतीतस्यैव प्राकृतधर्मसङ्घस्य सर्वत्र निषेधो ज्ञेयः। लोकप्रतीत्या प्राप्तत्वेन निषेधस्य सुवचत्वात्। नचैवं प्रातीतिकप्राकृतधर्माभावस्यापि मिथ्यात्वं, न तु तिरोभावरूपत्वमिति सिद्धान्तात्। तथाचोपनिषदुक्तधर्माणां यत्राऽभावः प्रतिपाद्यते तत्राभावानां तिरोभावरूपत्वम्। न च तिरोभावकृता सिद्धान्ते द्वैतापत्तिः। आविर्भावतिरोभावौ शक्ती वै मुरवैरिण इति वाक्यात्। यत्र तु प्रातीतिकप्राकृतधर्मप्रतियोगिकाभावाः प्रतिपाद्यन्ते तत्र प्रतियोगितदभावयोरपि मिथ्यात्वं वन्ध्यासुतवदभावयोरिवेति न कश्चिद्दोषः। अभावास्त्वस्मन्मते तिरोभावातिरिक्ता न भवन्तीति सुबोधिनीफक्किकायामपि सत्प्रतियोगिका अभावा इत्यर्थो बोद्धव्यः। तथाच सिद्धमप्राकृतश्रौतधर्मवत्त्वं प्राकृतधर्मराहित्यं ब्रह्मणः। प्राकृतधर्मास्तु प्रकृतिजन्या अवयवभूताः स्थूलत्वादयः सन्त इव प्रतीयमानास्ते श्रुत्या ब्रह्मणि निषिद्ध्यन्ते। नच, 'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः * सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमिति वाक्यात् प्रकृतेर्ब्रह्मरूपत्वेन सत्त्वात्तज्जन्यानां कथमऽसत्त्वमिति वाच्यमानटादिभ्यः मृद्भ्य उत्पन्नानां रसालादीनामसत्त्वस्य सर्वैरनुभूयमानत्वात्। तस्मात् सतः सदुत्पद्यते ह्यसदऽप्युत्पद्यत इति न किञ्चिद् दूषणम्। ननु प्रपञ्चस्य ब्रह्माभेदेन

तत्स्थूलत्वलघुत्वादीनामपि ब्रह्मणि सत्ता वाच्येति कथं प्रापञ्चिकधर्माभावो ब्रह्मणि सिद्धान्तित इतिचेन्न । सत्यम् । ऋतेऽर्थं यत्प्रतीयेतेति चतुःश्लोकीवाक्ये सिद्धा या विषयता तद्विशिष्टत्वात् तत्प्रपञ्चस्य प्रापञ्चिकस्थूलत्वाणुत्वादीनां विषयतायुक्तानां ब्रह्मण्यभावो युक्त एवेति बोध्यम् । न च धर्मवत्त्वेन द्वैतापत्तिः । प्रकाशाश्रयन्यायेन धर्मभेदात् । किञ्च व्यक्तिः शब्दार्थः, जातेस्तूपलक्षितत्वमिति मतम् । तेषां विशिष्टायाः शक्तेः कल्पने शक्यद्वयापत्त्या गौरवम् । केवलायां तत्कल्पने तासामतीतानागतवर्त्तमानानामनन्तत्वेन शक्यत्वज्ञानासम्भवात् । शुक्लायां व्यक्तौ व्युत्पन्नस्य गोशब्दस्य कृष्णायां प्रयोगे व्यभिचारः । तस्माद्विशिष्टा व्यक्तिः शब्दार्थ इति मतम् । तस्मिन् यत्र विशेष्ये निर्विशेषत्वादिकं तस्य तदवाच्यत्वायोगादुक्तस्य दूषणस्य द्वितीयमतेऽपि सम्भवात् । प्रथमे तु पक्षे घटादिव्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणस्सत्ताविशेषार्थं जातिवाचिभिः सत्यादिशब्दैर्मञ्चशब्देन पुरुष इव ब्रह्म जात्याधारव्यक्तिसम्बन्धितयैव लक्षितमिति वक्तव्यत्वेन मुख्यार्थाभावादिदोषतादवस्थ्यात् । सत्यं ज्ञानमित्यादौ ब्रह्म सत्यत्वधर्माश्रयतयैव लक्ष्यते । घटादिवत् सखण्डार्थत्वात् । किञ्च, निर्गुणत्वप्रकाशादेरब्रह्मत्वे प्राप्ते यद्यद्ब्रह्मतयेष्टं तत्तद् ब्रह्मेति साधु समर्थितं ब्रह्मणो वाच्यत्वम् । नन्ववाच्यादिशब्दाः समस्तरूपाः, लक्ष्यादिशब्दास्तु यौगिकाः । उभयेषामपि वाक्यतुल्यत्वान्न वाचकतेतिचेन्न । प्रस्थानरत्नाकरे वाक्यशक्तेर्निपुणतरमुपपादनात् । समासे पदार्थसंसर्गस्य, यौगिके प्रकृतिप्रत्ययार्थसंसर्गस्य चानभिधेयत्वेऽपि पदार्थस्य प्रत्ययार्थस्य च वाच्यत्वेन तदर्थस्य ब्रह्मणो वाच्यत्वापरिहाराच्च । यदि च न ब्रह्मपदाद्यर्थः, किन्तु पदाद्यर्थसंसर्गरूपं तर्हि सखण्डं स्यात् । यदि-

तु अवाच्यमित्यादौ पदद्वयादिकं न स्वार्थसंसर्गपरं किन्तु ब्रह्म-मात्रलक्षकं, तथापि न तेनावाच्यत्वसिद्धिः। वेदान्ततात्पर्यविषयो ब्रह्म वाच्यम्। वस्तुत्वाल्लक्ष्यत्वाच्च। तीरवत्। परमार्थसदादि-पदं कस्यचिद्वाचकम्। पदत्वात्। घटपदवत्। सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवत्पदयुक्तम्। वाक्यवदित्याद्यनुमानैश्च वाच्यत्वम्। ननु प्रवृत्तिनिमित्ताभावात् कथं वाच्यत्वम्। उक्तं हि, दृष्टा गुण-क्रियाजातिरूढयः शब्दहेतवः * नात्मन्यऽन्यतमोऽमीषां तेनात्मा नाभिधीयत इति। नच घटादाविवारोपितं निमित्तमस्तीति शङ्क्यम् आरोपिते श्रुतितात्पर्यायोगेन तात्पर्यविषयस्य वाच्यत्वायोगादि-तिचेन्न। सत्यादिशब्दानां लक्षकत्वसिद्धौ निमित्ताभावः। तस्मिँश्च सिद्धे लक्षकत्वम् इत्यन्योन्याश्रयात् स्वरूपमात्रप्रश्नोत्तरत्वेन तल्लक्षकतेत्यस्यासम्भवात्। निर्विशेषवाक्यस्य च स्वरूपमात्रपरत्वे सत्यत्वाद्यविरोधात्। तस्य निर्विशेषत्वविशिष्टपरत्वे तु निमित्तस्य सत्त्वेन निर्विशेषशब्दवाच्यत्वापातात्। अभावनिमित्तकशब्दवा-च्यत्वे च निर्गुणत्वभङ्गे प्रामाणिकत्वाविशेषेण भावनिमित्तकशब्द-वाच्यस्यापि दुर्वारत्वात्। तस्मात् सर्वेषां वैदिकशब्दानां ब्रह्मणि लक्षणेत्येतदयुक्तम्। तथाह कश्चित्। एकस्यापि च शब्दस्य गौणार्थस्वीकृतौ सताम् * महती जायते लज्जा यत्र तत्राखिला रवाः॥ अमुख्यार्था इति वदन् यस्तन्मार्गानुवर्त्तिनाम्। कथं न जायते लज्जा वक्तुं शब्दत्वमात्मन इति॥

यत्तु, कथं लक्ष्यत्वमत्यन्तावाच्यस्येति न चोद्यताम् * अत्यन्ता-वाच्यशब्देन लक्ष्यस्यैवाऽवबोधनादित्युक्तम्। तन्मन्दम्। लक्ष्यत्वे वाच्यत्वस्य तन्त्रत्वात्। तथाहि। लाक्षणिकः शब्दो न श्रुत एवाऽर्थान्तरधीहेतुः। तत्राग्रहीतशक्तित्वात्। किन्तु पूर्वं धीस्थे वाच्यार्थेऽनुपपत्तिदर्शने सति तद्योगेन स्वरूपतो वाच्यार्थ-

सम्बन्धित्वेन वावगतस्यार्थान्तरार्थस्य बोधकः । गङ्गाशब्दादौ तथा दर्शनात् । अन्यथाऽतिप्रसङ्गात् ; तथाच ब्रह्मणोऽपि लक्ष्यत्वे वा शब्दे वैयर्थ्यात् । उपपादितं चैतन्मयात्मवादे । अवाच्ये च शब्दस्य लक्षकस्यैव वक्तव्यत्वात् । तत्रापि वाच्यसम्बन्धित्वेन ज्ञेयत्वेनाऽनवस्थेति कथमवाच्ये लक्षणा । तथाचाह कश्चित्—

वाच्ययोगितया बुद्धं लक्ष्यं ब्रह्म च वैदिकम् ।

अवाच्यं वेति वक्तव्ये लक्षके ह्यनवस्थितिः, इति ॥

नच वाचकस्यापि गृहीतसङ्गतिकस्यैव बोधकत्वात् सम्बन्ध-ग्रहणस्य च सम्बन्धिज्ञानाधीनत्वात् सम्बन्धिनश्च ब्रह्मणः शाब्दैक-गम्यत्वात्तत्राप्यनवस्थेति वाच्यम् ।
यौगिकशब्दानां वाक्यतुल्यत्वेन सङ्गतिग्रहणानपेक्षणात् । एवं चावाच्यंचेद् ब्रह्म, न सिध्येदितिदिक् । यतो वाचो निवर्त्तन्त इति श्रुतिस्तु लौकिकवागप्राप्यत्वमाह । तं त्वौपनिषदं पुरुषं पृच्छा-मि, अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः, सर्ववेदान्तप्र-त्ययमित्यादिश्रुतिस्मृतिन्यायविरोधाच्च । केचित्तु— यतो वाचो निवर्त्तन्ते, अशब्दमस्पर्शमित्यादिश्रुतिरद्भुतत्वाभिप्राया । न तदी-दृगिति ज्ञेयम् । न वाच्यं न च तर्क्यते, पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित इत्यादौ तथा दर्शनात् । अद्भुतत्वादवाच्यता मनःसहभावोक्तेर्वेदस्यापौरुषयत्वे ईश्वरनिःश्वासत्वे वा मनःसह-भावाभावात् । दूतीरिव त्वं मनसोऽसीति श्रुत्या लौकिकवाच एव तथात्वकथनात् । अनृतं वै वाचा वदति अनृतं मनसा ध्यायती-त्यादावपि तथा दर्शनात् । अनिरुक्तश्रुतिविरोधाच्च । इदमित्थ-तया कथितस्य निरुक्तपदार्थत्वेन तद्भिन्नस्याविरुद्धत्वात् सर्वथा निरुक्तत्वस्य तेनैव निरासात् । तर्काज्ञेयमेव च । अनन्तगुणपूर्ण-त्वादित्यूचे पैङ्गिनां श्रुतिः * अवाच्यमिति लोकोऽपि वक्त्याश्चर्य-

तयं भुञ्जीत्युक्तेश्चेत्याहुः । तस्मान्न कथमपि सोपाधिकत्वसिद्धि-रित्यनिच्छताऽपि विरुद्धधर्माश्रयत्वमङ्गीकार्यम्॥ प्रकृतमनुसरामः॥

स्यादेतत् । अस्तु विरुद्धधर्माश्रयत्वम् । तथापि धर्माणाम-ऽनित्यत्वान्निर्गुणमेव पर्यवसितमिति। नैतत् । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतौ शक्तेः परत्वेन वि-शेषणात् । किञ्च, शब्दनित्यता मीमांसकादिमतसिद्धा । सा सिद्धान्तेऽपि स्वीकृता । शब्दार्थयोश्च नित्यसबन्धात् कथं तदर्थ-धर्माणामनित्यता। तदुक्तम्, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति सूत्रे— औत्पत्तिक इति नित्यं ब्रूम इति, शबरस्वामिभिः। ननु प्रतियोगिसापेक्षतन्निरपेक्षभेदेन कर्म द्विविधम् । तत्र द्वितीयं, तदेजति तन्नैजतीत्यादिश्रुतिसिद्धत्वादस्तु । प्रथमं तु कथं भवेदि-तिचेन्न । नच तन्मते आकृत्यधिकरणे जातौ शक्तिस्वीकाराद् धर्मानित्यत्वेऽप्यक्षतिरिति शङ्क्यम् । शब्द इति चेन्नाऽतः प्रभवात् प्रत्यक्षानुमानाभ्यामिति सूत्रे व्यासपादैः वैदिक्यां नित्यायामेव व्यक्तौ सम्बन्धस्वीकारादाकृतौ सम्बन्धस्य लक्षणादोषग्रस्तत्वा-त् । लीलातत्सम्बन्धिनोर्नित्यतायां हि बाधकं भवद् यथासम्भवं कर्तुरनित्यत्वं वा भवेत् १ स्वरूपतः सम्बन्ध्यनित्यत्वं वा २ प्र-माणाभावो वा ३ प्रमाणतात्पर्याभावो वा ४ तस्य तात्पर्यान्तरं वा ५ गौणः प्रयोगो वा ६ उत्पत्तिमत्त्वं वा ७ क्रमिकत्वं वा ८ अननुभवो वा ९ तन्नित्यताभावने उपासकेऽपराधप्रसक्तिर्वा १० तेष्वप्रमादो वा ११ इदानीमिदमित्याकारको लीलास्थानामवतार-कालीनानां वा कादाचित्कत्वेनाऽनुभवो वा १२ प्रमाणदौर्बल्यं वा १३ अधिष्ठानध्वंसप्रयुक्ता लीलासम्बन्ध्यनित्यता वा १४ साधारणजनदृश्यत्व वा १५ लौकिकत्वं वा १६ भगवद्भिन्नत्वं वा १७ भूतार्थकप्रयोगो वा १८ तथाऽनुभवो वा १९ भविष्य-

दर्थकः प्रयोगो वा २० भविष्यत्त्वानुभवो वा २१ जन्यभावत्वेन नश्वरत्वेन व्याप्तिर्वा २२ कर्मस्वभावमर्यादा वा २३ प्रत्यक्षबाधो वा २४ लौकिकेष्वपि भक्तानां लीलासम्बन्धित्वेन बुद्धिर्वा २५ नाशप्रतियोगित्वं वा २६ प्रमाणयोरितरेतरविरोधो वा २७ लीलास्थानां नाशानुभवादिर्वेति २८ ॥ तत्र नाद्यास्त्रयः । जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेवमिति वाक्ये भिन्नकालानामपि द्वारकागोकुलमथुराधिकरणानां भावं निरूपयन्नेव श्रीशुकस्तत्र तत्र लीलानामपि तथात्वं बोधयितुमेककालीनत्ववाचकशतृप्रत्ययान्तपदे प्रयुक्तवान्—अस्यन्निति वर्द्धयन्निति च । तथाच कथनसमयेऽतीतत्वेन प्रतीतानामपि लीलानां तदा वर्तमानत्वं प्रतीयते । तच्च नित्यतायामेव घटते, नान्यथा । न तुरीयः । कर्तुरेवेदानीं सत्त्वं चेदभिप्रेतं स्यान्न लीलानामपि, तदा न निरूपयेदेव । न पञ्चमः । परिचायकत्वेन तन्निरूपणे वा तत्तत्कर्ता जयतीत्येव वदेत् । एवञ्च सति गत्यन्तरसद्भावेऽपि यच्छत्रन्तस्यैव निरूपणं तेन लीलानामेव वर्त्तमानत्वं मुख्यतयाभिप्रेतमित्यध्यवसीयते । नच विशेषणत्वेनाऽमुख्यत्वमिति वाच्यम् । दण्डी प्रैषानन्वाहेत्यत्र यथा प्रैषानुवादस्य, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र च तत्प्रचारस्य पूर्वसिद्धत्वेन न विधानं, किन्तु विशेषणस्यैव दण्डित्वस्य लोहितोष्णीषत्वस्य च । अपूर्वत्वात् । तथा भगवतो वर्त्तमानत्वे संदेहाभावात्तत्लीलाकरणस्यैव वर्तमानत्वस्यापि निरूपणात् । न षष्ठः । यद्यपि वर्तमानसामीप्ये वर्त्तमानवद्वेत्यनुशासनाद्वर्त्तमानसामीप्यादेवात्राप्येवं प्रयोग इति वक्तुं शक्यं, तथापि वक्ष्यमाणश्रुतिपुराणवाक्यैरसंदिग्धं नित्यतया निरूपणादत्रापि तदेकवाक्यत्वार्थं

वर्त्तमानार्थ एव प्रयोग इति निश्चीयते । यद्यपि सामीप्येऽपि तथा प्रयोगस्तथापि तत्र तस्य साधुत्वं ज्ञाप्यते । प्रयोगश्च सामीप्यगुणयोगाद् गौण एव, न तु मुख्यः । स च मुख्यार्थबाध एव कल्पयितुं युक्तः । तद्बाधप्रकारश्चाग्रे वक्ष्यते । नान्ये षद् । दशमस्कन्ध एव नामकरणप्रस्तावे सर्वज्ञेन गर्गाऽऽचार्येण निरूपितं, बहूनि सन्ति नामानि रूपाणि च सुतस्य ते * गुणकर्मानुरूपाणि तान्यहं वेदं नो जना इति । अत्र हि नाम्नां रूपाणां च बहूनामेव सन्तीति प्रयोगेण वर्त्तमानत्वं बोध्यते । तत्रापि गुणानामौदार्यादीनां कर्मणां कालीयदमनादीनामनुरूपाणां तेषां तथात्वं बोध्यते । अनुरूपत्वं तु तत्समययोग्याकारक्रियादिमत्त्वम् । यथा गोवर्द्धनोद्धरणकर्मणि उत्थितत्वमुद्बाहुत्वं तद्धारणक्रियावत्त्वं सकलगोकुलजनाप्यायकत्वादिकत्वं च तत्प्रयोजकम् । तथाचैतादृशानां नाम्नां वर्त्तमानत्वं तदैव स्याद्यदि तत्र स्वरूपक्रियादीनां वर्त्तमानत्वं स्यात् । अन्यथा कदाचित् तत्क्रियानिवृत्तौ तत्प्रयुक्तं नामापि तदा न स्यात् । पाचकपाठकवत् । ननु यथा लोके पाकानुकूलक्रियाराहित्यदशायामपि पाचकमाकारयेत्यादिप्रयोगो यदाकदाचित् तद्वत्त्वेन तदानीमपि तथोपचारस्तथाऽत्रापि कदाचिद् गुणकर्मयोगात् प्रवृत्तस्य नाम्नो गुणकर्मराहित्यदशायामप्युपचारात् प्रयोगसम्भवेन सन्तीत्यस्योपपत्तेर्न तन्नित्यत्वमायातीतिचेन्मैवम् । औपचारिकप्रयोगे नामत्वाभावात् तस्य मुख्ययैव वृत्त्या बोधकत्वात् । लोके नरसिंहादिनामानि तु डित्थकपित्थादिनामवद् रूढ्यैव तद्वाचकानि, न तूपचारतः । केवले नरेऽप्यशूरेऽपि च तथा प्रयोगात् । अत एव लौकिकपुरुषे प्रयुक्तानि श्रीकृष्णेत्यादीनि नामानि न भगवन्नामानि । तेषां सदानन्दरूपत्वाद्यर्थवाचकत्वेन लौकिकपुरुषे च तदभावेन तदनर्थको

लौकिकवत् तत्स्वरूपशब्दविशेषः स इति मन्तव्यम् । भगवन्नामानि त्वखण्डशब्दब्रह्मरूपाणि । यथा भगवत्स्वरूपे शरीरित्वभानं ग्राहकदोषात् तथा नामस्वपि लौकिकशब्दत्वेन भानं तद्दोषादेवेत्यादि प्रपञ्चितं श्रीभागवतविवरणे आचार्यैः । तेन स्वरूपवन्नाम्नामपि सर्वेषां नित्यता मन्तव्या । ननु गुणकर्मानुरूपाणि इति वचनाद् गुणकर्मकरणानन्तरं भाविनां नाम्नां कथं ब्रह्मत्वम् । तस्य त्रैकालिकाबाधनिषेधादितिचेन्न । स्वरूपवत् कर्मणामपि प्रादुर्भावेन तदनुरूपनाम्नामपि प्रादुर्भाव एव परं, न तूत्पत्तिः । अन्यथा निजमखविहतिकुपितदशशतभगकृताशनिसारासारावसन्ननिजव्रजजनाऽवनाय वामकरकमलनखराऽग्रनिहितशिखरिवरगोवर्द्धनाचले श्रीगोकुलनाथे विहताखर्वगर्वशक्रसुरभिप्रभृतिविरचितमहाभिषेकसमयसमनुभूतत्वेऽपि गोविन्दनामाग्रे भावि पूतनास्तपयःपानानन्तरं स्वप्राणेभ्योऽप्यतिवल्लभे बीजन्यासं कुर्वत्यो व्रजवरवध्वः, क्रीडन्तं पातु गोविन्द इति, गुणगाने च, गोविन्दवेणुमनुमत्तमयूरनृत्यमिति कथं वदेयुः । तेन यत्कर्मविशिष्टस्य यस्य रूपस्य यन्नाम तत्कर्मविशिष्टं तद्रूपं नित्यमेव । लोके परं तेषां तेषां भक्तानां तत्तद्रसानुभवार्थं क्रमेणाविर्भावः कस्याप्यंशस्य, कस्यचिदाच्छादनमित्येवं मन्तव्यम् । तेन भगवान् गोवर्द्धनमुद्धरन् सर्वदा वर्त्तत इति गोवर्द्धनोद्धरणधीर इति क्रियानामभ्यां सहितो गोवर्द्धनोद्धरणरूपः सदा वर्त्तते । अत एवाद्यापि भक्तानां तथाऽनुभवः क्वचित् । तथा प्रतिकृतौ भजनं, तथा स्मरणं च । अन्यथा त्वतथाभजने प्रमादः । एवं सति रूपे नामावश्यकत्वेन तत्कर्मानुरूपनामापि नित्यमेवेति नोपचारशङ्कागन्धलेशोऽपि । नामवद् रूपस्यापि गुणकर्मानुरूपत्वेनोक्तत्वेन तत्रापि नौपचारिकमत्त्वशङ्का तथा नाम्न्यपीति बुद्ध्यस्व । गुणकर्मणामपि नित्यत्वप्रतिपादनायैव गुणकर्मा-

नुरूपाणीत्यप्युक्तमिति ज्ञायते । अन्यथा, कुरु द्विजातिसंस्कार-मिति प्रार्थितत्वेन नामकरणाख्यसंस्कारमात्रस्यैव कर्त्तव्यत्वे सति नाम्नां रूपाणां च तत्रापि गुणकर्मानुरूपाणां वर्त्तमानत्वं न नि-रूपयेत् । प्रयोजनाभावात् । एवं सत्यपि यत् तन्निरूपणं तेनैवं ज्ञापयति, मदुक्तान्यपि नामधेयानि न मया कृतानि किन्तु पूर्व-सिद्धान्येव, मयाऽनूद्यन्ते परम् । ते सुतस्य बहूनि नामानि रूपाणि सन्तीति समभिव्याहारवशान्नन्दसुतत्वमप्यनादीति ज्ञाप्यते । तेन नन्दस्याऽपीदानीं मम पुत्रो जात इति ज्ञानमप्यनादीति ज्ञेयम् । गर्गस्याऽपि नामकरणलीलामध्यपातित्वेन तदागमनवचनादीनामपि नित्यत्वेनानादित्वमेव । पूर्वसिद्धाया एव लीलाया भगवदिच्छया क्रमेणाविर्भाव इति पूर्वमेवोक्तत्वात् सर्वं सुस्थम् । श्रुतिरपि गुण-कर्मानुरूपरूपाणां प्रत्येकं नित्यत्वाभिप्रायेणैवाह । तदेजति तन्नै-जति तद् दूरे तदन्तिक इत्यादि । अन्यथैकस्यैवैकस्मिन्नेव काले क्रियावत्त्वतद्राहित्ये विरुद्धे कथं बोधयेत् । तेन येन रूपेणैजति तस्य रूपस्य तदेजनस्य च नित्यत्वेन तत्तथा । यच्च रूपं स्थिरं तस्य रूपस्य तत्स्थैर्यस्य च नित्यत्वेन नैजत्यपि । नच सक्रियाक्रिययोः स्वरूपयोर्भेदः शङ्कनीयः । यत एव तत्परिहारा-यैव पुनः पुनर्ब्रह्मवाचकतच्छब्दस्यावृत्तिमाह पूर्वं तच्छब्दस्यैव सर्वत्र सम्बन्धाऽर्हत्वेऽपि । तथाच अनेकनित्यरूपकमनेकनित्य-क्रियाकमनेकनित्यनामकं ब्रह्मेति फलितम् । किञ्च, ऋग्वेदेऽपि पठ्यते । ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरीति । ता तानि वां युवयोः कृष्णरामयोर्गोपीमाधवयोर्वा वास्तूनि गम-ध्यै प्राप्तुम् । उष्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्घाटयति । यत्र गोकुले भूरिशृङ्गा दीर्घशृङ्गाः

गावो वसन्तीति शेषः । अथवा आरण्याग्राम्यापशूपलक्षणार्थम् । भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगा गावश्चेत्यर्थः । अयासः । शुभाः । अत्राह । अत्र स्थाने भूमौ तल्लोकवेदप्रसिद्धम् । उरुगायस्योरुकीर्त्तेर्भगवतो वृष्णः गोपिकासु कामवर्षकस्य । कामान् वर्षतीति वृषा तस्य तद् गोकुले परमं पदम् । पदं स्थानं वैकुण्ठं तस्मादप्यधिकं परमं पदं प्रकृतिकालाद्यतीतत्वेनापि वैकुण्ठाद्यपेक्षयातिप्रियत्वेनापि परमं तादृशपदमवभाति प्रकाशते । भूरि बहुतरम् । तथाच यदेतादृशं तयोः स्थानं तत्स्थानसम्बन्धीनि वस्तूनि प्रसादत्वेन प्राप्तुं कामयामहे, नाऽन्यानीति वाक्यार्थः सम्पद्यते । भूरिशब्दस्य बाहुल्यार्थकत्वेन अनेकविधनिकुञ्जगह्वरप्रदेशयमुनापुलिनगोवर्द्धनसान्वादिषु निरन्तरं भगवतः स्थिरा तावद्रूपं प्रकाशत इति तात्पर्यार्थः । भूधातोराप्त्यर्थत्वे व्यापकमिति वा । तथाच परमत्वेन भगवत्स्थानत्वेन भूरित्वेन च नित्यत्वमेव गोकुलस्यायाति । किञ्च, तैत्तिरीयकेऽपि पठ्यते । ते ते धामान्युष्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः।अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेरिति । ते तव, ते तानि धामानि स्थानानि गमध्यै प्राप्तुम् । उष्मसि कामयामह इति । शेषं पूर्ववत् । भूरेः बहुरूपस्य रासोत्सवादिषु तथा प्रकटत्वात् । अत्र स्वयं नित्यो वेद आभातीति वदन् स्वभानविषयस्य गोकुलस्यापि नित्यत्वमेवाह । अन्येषामभानपक्षेऽपि वर्त्तमानप्रयोगेण विषयस्यापि वर्त्तमानत्वमेवायाति । एतदनन्तरमेव च पठ्यते।विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा । तद्विष्णोः परमं पद॰सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति मन्त्रद्वयम् । तथाच पूर्वस्मिन्मन्त्रे यत्र भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पदमित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि विष्णोः कर्माणि

पश्यतीति मन्त्रेण निरूप्य पुनः पूर्वोक्तं लीलास्थानं तद्विष्णोः परमं पदमिति पदेनानूद्य तस्य नित्यत्वनिरूपणायाह।सदा पश्यन्ति सूरय इति । सूरयो विद्वांसः । तत्त्वं च शब्दब्रह्मपरब्रह्मस्वरूपवित्त्वम् । परब्रह्मज्ञानं च भक्त्यैवेति निर्णयः । भक्त्या मामभिजानातीति वाक्यात् । भक्त्याहमेकया ग्राह्य इति वाक्याच्च। तेन सूरिपदेन भक्ता उच्यन्ते । नन्वत्राह तदुरुगायस्येति, सूरयः सदा पश्यन्तीति वाक्यैकवाक्यतायां भूमौ तत्परमं पदं भक्ता एव सदा पश्यन्तीत्यर्थः सम्पद्यते । तथाच काननकालिन्दीतटपुलिनविचराद्यात्मकत्वेनोद्भूतरूपवन्महच्च तत्परमं पदं कथं भक्त्यैकदृश्यं, न साधारणजनचक्षुर्विषय इत्याशङ्क्य तन्निरासाय दृष्टान्तमाह । दिवीव चक्षुराततमिति । दिवि स्वर्गे यथा आसमन्तात्ततं व्याप्तम् । यन्न दुःखेनेति वाक्यात् सुखैकसाधनतद्रूपं तत्रस्थानामेव चक्षुः पश्यति, नान्येषां तथेत्यर्थः । तेन तल्लीलामध्यपातिनामेव तद् दृश्यमिति साधारणजनाविषयत्वेऽपि न दोष इति भावः । अथवा पूर्वोक्ताशङ्कायामेवोच्यते । पूर्वमिति । एवं स्वर्गस्थपदार्थदर्शनाभावेऽपि योगधारणया दूरग्रहणाख्यसिद्धिसम्पत्तौ योगिनश्चक्षुराततं सर्वतो व्याप्तं सर्वग्रहणसमर्थं सदित एव स्वर्गे पदार्थान् पश्यति यथा तथैतस्यापि पूर्वमदृश्यत्वेऽपि तादृशभगवदनुग्रहेण तच्छक्तिलाभे सति तदधिकारः सम्पन्न इति तदर्थं तथा भगवान् प्रकटोऽपि भवतीति तदा दृश्यत्वं भवतीत्यर्थः । तेनाधुनिकानामपि पूर्वोक्ताधिकारसम्पत्तौ तद्दर्शनं भवतीति सिद्धम् । अथवा दृष्टान्तत्रयमत्र । तथाहि । पूर्वोक्तपरमपदस्य लोकरूपत्वेन इतरलोकन्यायेन दुःखस्यापि तत्र सम्भवाद्भगवल्लीलायाश्चानन्दरूपत्वात् कथमेतस्याऽऽनन्दैकरूपत्वमत उक्तं दिवीवेति । यथान्यलोके दुःखासंभिन्नसुखरूपत्वेऽपि स्वर्गे दुःखासंभिन्नसुखरूपत्वं

तथा गोकुल आनन्दैकरसरूपत्वमित्यर्थः । नन्वित्यादिनोक्ताशङ्कायामाह । चक्षुरिवेति । यथा चक्षुरेव रूपं गृह्णाति, न श्रोत्रादिकम् । इन्द्रियत्वाविशेषेऽपि तस्यैव तत्र सामर्थ्यात् । वस्तुन एव तथात्वात् । तथात्राऽपीत्यर्थः । यथा दोषाऽसहकृतमेव चक्षुर्वस्तुतत्त्वं गृह्णाति, भ्रमिकामलादिदोषसहकृतं तु महीभ्रमिशङ्खपीतिमादिकं, तथाऽविद्यादिदोषरहिताः सूरय एव गोकुलादिस्वरूपं पश्यन्ति, नान्य इत्यपि चक्षुर्दृष्टान्तस्याभिप्रेतमिति ज्ञेयम् । एतेन तत्रस्थवृक्षस्थलादीनां व्रजनाऽन्यथाभावदर्शनादिषूपपत्तिरुक्ता भवति । यद्वा चक्षुरिति द्वितीयैकवचनान्तपदम् । यथा चक्षुरिन्द्रियं स्वयमतीन्द्रियमेव गोलके स्थितं सत् सर्वं प्रत्याययति गोलकेऽपि चक्षुःशब्दवाच्यताञ्च विधत्ते, योगिप्रत्यक्षविषयश्च भवति, तथा गोकुलादिकमप्यलौकिकं स्वयमतीन्द्रियमेव साधारणजनदृश्ये स्वयोग्ये स्थाने स्थितं सत् तत्स्थानं प्रकाशयति, स्वव्यपदेशं च प्रापयति, तत्रैव च स्थितं भवति, पूर्वोक्तसूरित्वे दृश्यं च भवति । तथाचैतादृशं परमं पदं सूरयः सदा पश्यन्तीति सम्बन्धः । ननु साधारणजनदृश्यस्याधिष्ठानत्वपक्षे तस्यैव करणदोषादन्यथा भानपक्षेऽपि तत्र स्थितानां लोकानां दुःखकामक्रोधादिकमनुपपन्नम् । तस्य परमानन्दरूपत्वाद् गुणातीतत्वाच्च । नच करणदोषेणैव द्रष्टुस्तत्स्थितलोकदुःखादिदर्शनमिति वाच्यम् । करणदोषस्यापि तत्र वक्तुमनुचितत्वात् । तत्रैवान्योन्यं तथा दर्शनादित्यत उक्तम् । आततं चक्षुरिवेति । यथा देवदत्तचक्षुरिन्द्रियं विष्णुमित्रशरीरे आसमन्ताद् व्याप्तमपि तैजसं सदप्यनुद्भूतरूपस्पर्शत्वेन नान्धतमसे प्रकाशयति, तापयति वा तथा भगवदिच्छयैवाप्रकटानुभावत्वेन तस्य पक्षद्वयेऽप्याधुनिकतज्जनदोषदर्शनमुपपद्यत इत्यर्थः । तादृशी भगवदिच्छा तु सर्व-

मुक्त्यभावायाऽऽसुरजीवानां व्यामोहाय च । यथा योगिनामेव प्रत्यक्षं तथा भक्तानामेवैतदपीति पूर्वमेवावोचाम । अथ विष्णोः कर्माणीति मन्त्रो व्याख्यायते । अत्र पूर्वस्मिन्मन्त्रे गोकुलस्यैव निरूपणाद् तत्र कृतान्येव कर्माणि यशोदास्तनपानपूतनासुपयःपानरिङ्गणादीनि कर्माणि कर्मपदेनोच्यन्त इत्यवगम्यते । अत एव, यतो व्रतानीति । यतः कर्मभ्यो हेतुभूतेभ्यो व्रतानि कात्यायन्यर्चनादीनि सांनिध्याद् विष्णुरेव पस्पशे स्पृष्टवान् । तत्फलत्वेन तत्कर्त्रीष्वाविर्भूय तासु सर्वां लीलां कृतवानित्यर्थः । स्पश बाधनस्पर्शनयोरिति धातोर्लिटि रूपमिदम् । अयं चोभयार्थकः प्रयोगः । तेन व्रतानि लोकमर्यादाव्रतानि पातिव्रत्यादीनि बबाध इत्यर्थः । वेदमर्यादात्याजकानां कर्मणां सदोषत्वशङ्कापरिहारायाऽव्ययप्रयोगः । तेन तेषामविकृतत्वमुक्तं भवति । स्वव्रतान्यप्यात्मारामत्वपूर्णकामत्वादीनि नियमरूपाणि बबाधे । अस्मिन्नर्थे नञ्प्रश्लेषे अव्रतानि स्पृष्टवानित्यप्यर्थो युज्यते । तानि कर्माणि गोपीभिः सह रमणरूपाणि पश्यतेत्युपदेशः । यद्यपि कर्मदर्शनस्य फलत्वेन न स्वकृतिसाध्यत्वं तथापि मोक्षरसाधिकरसानां स्वतः पुरुषार्थरूपाणामतिहृद्यानां स्मरणतस्तत्पारवश्यमौत्सुक्यं च श्रुतेः प्रकटयत्येवं कथनम् । तेन तत्साधनोपदेशः पर्यवस्यति । एतेन कर्मणां नित्यत्वं ज्ञेयम् । अन्यथैतदुपदेशासम्भवात् । इन्द्रस्य युज्यो योग्योऽनुकूलः सखा । अयमर्थः । भगवतेन्द्रयागभङ्गे कृते बहुबलाद् वृष्ट्यादिभिरिन्द्रेण द्रोहे कृतेऽपि तद्धेतुभूतदोषरूपमदमेव दूरीकृतवान् सर्वसमर्थोऽपि, न त्विन्द्रं तदधिकारं वा । तथाच तद्दोषहरणेन तदनुकूलः । तदनन्तरमिन्द्राभिषेकगोविन्दनामधारणादिभिस्तत्समानधर्मैस्तस्य सखा । एतेनाप्रपन्नेऽपि प्रत्युतापकारकर्त्तर्यपि स्वयमुद्यम्य तद्दोषनिवर्त्तकस्तद्धर्माङ्गीकर्त्ता च नान्यो-

ऽस्तीति परमकृपालुत्वं दर्शितम् । तेन भजनौपयिकरूपमुक्तम्भवति । यद्वा, यतः कर्मभ्य इन्द्रस्य व्रतानि यागादीनि पस्पशे ववाधे तानि पश्यतेत्यन्वयः । तानि कर्माणि केवलात्ममात्करणेऽपि तन्निवार्य स्वत एवात्ममात्करणलक्षणधर्मोऽसाधारणो ज्ञापितो भवति । तेनैतस्यैव भजनीयत्वमुक्तं भवति । अन्ये हि स्वभक्तसाधनसंपत्तौ फलं ददति, न त्वन्यथाऽपीति भावः । युज्यो योग्यो गोपिकानां तडिद्रूपत्वेन भगवतश्च नीलमेघश्यामत्वेन तासां योगार्हः सखा समानशीलव्यसनवानित्यर्थः । युजेर्बाहुलकात् क्यतः कित्वाद् गुणाभावः । एतन्मन्त्रद्वयानन्तरमेव ऋग्वेदे पठ्यते—

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते।विष्णोर्यत्परमं पदमिति।

एतदर्थस्तु— विष्णोर्यत् पूर्वोक्तं परमं पदमस्ति तत् पदं विप्रासो मेधाविनः । पुनः कीदृशाः । जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः । समिन्धते सम्यग्दीपयन्ति प्रकाशयन्ति । मेधावित्वेन यथोक्तभगवल्लीलास्वरूपाऽऽद्यनुसन्धानसहिताः । शब्दार्थयोः प्रमादराहित्येन वाच्यवाचकयोर्भगवद्रूपनाम्नोर्नित्यत्वे कुतर्काद्यनुपहतमतयो निरन्तरं कीर्त्तनरूपस्तोत्रादिसाधनैः प्रकटयन्तीत्यर्थः । तादृशसाधनसम्पत्त्या तद्दर्शनसामर्थ्ये सति पश्यन्तीति तथा । अत एव श्रीभागवतेऽप्युक्तम् । शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः ॥ त एव पश्यन्त्यचिरेणेत्यादि । तथाच स्थितस्यैव परमपदस्य समिन्धनमुक्तमिति नित्यत्वमेव काननपशुपक्षिमनुजादीनां तत्सम्बन्धिलीलानामपि । अथ च छान्दोग्ये पठ्यते— अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराऽऽकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यमिति प्रश्ने यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे

अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इत्यादिनाऽग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राण्युक्त्वा यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमित्युक्त्वा ब्रह्मपुरे जीर्णे ध्वस्ते वा तदाश्रितं किमवशिष्यत इति प्रश्ने,नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः, एष आत्मापहतपाप्मेत्यादि । अत्र ब्रह्मपुरशब्देन ब्रह्मणो भगवतः पुरं लीलास्थानं श्रीगोकुलमथुराद्युच्यते । शरीरार्थकत्वे एतत्सत्यं ब्रह्मपुरमित्यग्रिमं वाक्यं विरुद्ध्यते। अस्य नित्यत्वकथनार्थमेव तज्जरादिहेतुकतदाश्रितनाशं पूर्वपक्षत्वेनोक्त्वा, वस्तुतस्तु तत्र जरावधादिसम्भावनैव नास्ति । यत एतत् सत्यं ब्रह्मपुरं तथापि, तुष्यतु दुर्जन इति, न्यायेन, नास्य जरयेत्याद्युक्तं तर्कितं तदिति ज्ञेयम् । अत एव भक्तानां सर्वे कामास्तस्मिन् सम्यगाहिता इत्युक्तम् । एतच्चानन्दमयाधिकरणे सोऽश्नुते सर्वान् कामान् सह ब्रह्मणेति श्रुतिव्याख्याने प्रपञ्चितम् । किञ्च, दहर उत्तरेभ्य इत्यधिकरणेन व्यासैर्दहरशब्दवाच्योऽर्थो भगवानिति निर्णीतम् । भगवत्स्थानस्यापि भगवद्धर्मवत्त्वेन तत्स्थितियोग्यमिति वक्तुं श्रीगोकुलस्थभक्तहृदयकमलस्यापि दहरत्वमुक्तम् । तत्र व्याप्य प्रकटीभूय सर्वव्यवहारहेतुत्वेन स्थित इत्याकाशत्वमुच्यते । साक्षात्पुरुषोत्तमलीलोपयोगिपदार्था आकाशादयो द्युप्रभृतयोऽपि भगवदात्मका एवेति तदन्तःस्थिता एव, न तु कालाद्यधीनास्तदाश्रया वा । ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमिति भगवद्वाक्याच्च । यावान् वेति परिमाणसाम्यम् उपलक्षणविधयोक्तमिति ज्ञेयम् । तेन लीलास्थपदार्थाः स्वरूपतस्त्वलौकिका एव तथापि लौकिकस्वरूपा एवेति ज्ञाप्यते । लोकवत्तु लीलाकैवल्यमितिन्यायात्।एवं सति निष्प्रत्यूहं लीलानित्यत्वं श्रुतिवृन्दैरमन्द-

गीतममन्दानन्दकन्दममन्दभाग्यराशिभिर्मनुजैर्हृदि भावनीयम् ।

अपरञ्च । बृहद्वामनपुराणे गीयते उत्तरस्थाने खिले च भृग्वादीन् प्रति ब्रह्मणो वाक्यानि । षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा * नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये । तथापि न मया प्राप्तास्तासां वै पादरेणवः । श्रुत्वैतद् ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् । वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि ॥ सन्ति ते बहवो लोके वैष्णवा नारदादयः । तेषां विहाय गोपीनां पादरेणुस्त्वयाऽपि यत् ॥ गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥ ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् । कथा सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥ब्रह्मोवाच॥ न स्त्रियो व्रजसुन्दर्यः पुत्र ! ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ॥ प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा । शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥ ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः । निर्गुणोऽनाद्यनन्तश्च वर्त्तते केवलेऽक्षरे ॥ अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात् परः ॥ चिरं स्तुत्वा ततस्तुष्टः परोक्षं प्राह तान् गिरा । तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसीप्सितम् ॥ श्रुतय ऊचुः ॥ नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत । सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥ ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् । वाङ्मनोगोचरातीतं ततो न ज्ञायते तु यत् ॥ आनन्दमात्रमिति यद्वदन्ति ह पुराविदः । तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् । केवलानुभवानन्दमात्रमक्षरमध्यगम् ॥ यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः । मनोरमनिकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः । रत्नधातुमयः

श्रीमान् सुपक्षिगणसङ्कुलः ॥ यत्र निर्मलपानीया कालिन्दी सरितां वरा । रत्नबद्धोभयतटी हंसपद्मादिसङ्कुला ॥ नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् । तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ॥ दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः । दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ श्रुतय ऊचुः ॥ कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥ यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ श्रीभगवानुवाच ॥ दुर्लभो दुर्घटश्चैष युष्माकं सुमनोरथः । मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ आगामिनि विरञ्चौ तु जाते सृष्टयर्थमुद्यमे। कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ । पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले ॥ जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् । मयि सम्प्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥ ब्रह्मोवाच ॥ श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् । उक्तं कालं समासाद्य गोप्यो भूत्वा हरिं गता, इति ॥ अत्र हि श्रुतिभिः । सर्ववेदान्तप्रसयं गुणातीतं वाङ्मनोगोचरातीतमानन्दैकरूपं यत् तव रूपं तत् प्रदर्शयेति प्रार्थितो भगवान् गोकुलं तत्स्थितं स्वस्वरूपं लीलां तत्र क्रियमाणां च प्रदर्शितवानित्युच्यते । एतत् तदैव घटेत, यदि सर्ववेदान्तप्रसयत्वादिविशिष्टमेतद्भवेत् । एवं सति तन्नित्यता निष्प्रत्यूहा सिद्धा भवति । नच तत्स्थितस्वरूपमात्रस्यैव नित्यता, न लोकस्यापीति वाच्यम् । लोके प्रदर्शनवैयर्थ्यापातात् । अप्रार्थितत्वात् । तथाच स्वरूपदर्शनमात्रार्थं प्रार्थितो यद् वृन्दावनादिकमपि दर्शितवांस्तेन वृन्दावनाद्युक्तसामग्रीविशिष्टमेव सदा भगवद्रूपं न केवलमिति ज्ञापयति । वस्तुत एव तथात्वान्न शङ्कालेशोऽप्यत्र । अत एव

ब्रह्मस्वरूपविचारे, प्रकाशाश्रयवद्वा तेजस्त्वादिति सूत्रितं बादरायणेन । एतच्च यथा तथा पुरस्तादेवोक्तम् । नान्यौ द्वौ । तथाहि जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणम् । अवृश्चदद्रिमवसःस्पदसृजदस्तभ्नान्नाकं स्वपस्यया पृथुमिति । जज्ञान एव गोकुले जातमात्र एव स्पृधः पूतनातृणावर्त्तादिवैरिणो व्यबाधत । विविधप्रकारैर्विशेषेण वा हिंसितवान् । पश्चाद्वीरो विक्रान्तो मथुराद्वारकादिषु आभिपौंस्यमात्मपौरुषानुरूपं रणं दैत्यैः सह संग्रामं प्रापश्यदनुभूतवान् कृतवानित्यर्थः । भूमिष्ठदैत्यानां नाशकत्वमुक्त्वा देवेन्द्रमदभङ्गकारित्वमाह । अद्रिं गोवर्द्धनगिरिमवृश्चदुत्पाटितवान् । सस्पदः प्रस्रवद् इन्द्रप्रेरितं जलमवासृजत् अधिक्षिप्तवान् निवारितवान् । एतया स्वपस्यया गोकुलस्थितिकरणकर्मेच्छया पृथुं विस्तीर्णं नाकम् अस्तभ्नात् प्रतिबद्धवान् । इन्द्रादिदेवानां मदस्तम्भं कृतवानित्यर्थः । तथानुभवोऽपि श्रुतेरेव उत्तरम् । अग्रे स्फुटमिति । न विंशः । दशमस्कन्धे कात्यायन्यर्चनव्रतानन्तरं वरदानार्थमागतस्य भगवतो व्रजवरकुमारीषु वरदानवचनं गीयते । मयेमा रंस्यथ क्षपा इति । अत्रेमाः क्षपा इतीदंशब्देन ताभ्यः सर्वाः क्षपाः पुरःस्थिताः कृत्वा प्रदर्शितमिति ज्ञायते । अन्यथा ताः क्षपा इत्येव वदेत् । वदति च प्रातःसमये । तेनैतद्रात्रिसाजात्येन तासामेकस्यामेवेमा इति प्रयोगो जात्यभिप्रायेणेति न वक्तुं शक्यम् । बहुवचनानुपपत्तेश्च । नचेदंशब्दस्य भगवद्बुद्धिस्थतद्वाचकत्वेन सर्वोपपत्तिरिति वाच्यम् । कथनस्य परप्रतिपत्त्यर्थत्वेनैवंकथनेऽपि कुमारीणां तद्बोधासम्भवेनैतत्कथनवैयर्थ्यापत्तेः ॥ किञ्च । भगवतः सत्यसङ्कल्पत्वेन तत्त्वस्य चाऽबाधितविषयत्वेनात्र तासां रात्रीणां सप्रत्यभावे पूर्वोक्तसत्यसङ्कल्पत्वानुपपत्तिः । ननु, एष्यामि ते गृहं सुभ्रू, आयास्य इति

दीत्सकैः, ज्ञातीन् वो द्रष्टुमेष्याम इत्यादिषु स्थलेष्वग्रे भगवदाऽऽगमनं कथं नदैन वर्त्तत इति वक्तुं शक्यम् । तथात्वे वा कथनवैयर्थ्यापत्तिरनुभवविरोधश्चेतिचेन्नैवम् । सर्वस्या अपि लीलाया नित्यत्वेन पूर्वसिद्धाया एव क्रमेणाविर्भावः परमिति पूर्वमेवोक्तत्वात्तस्यागमनस्याधुनाऽप्रकटितत्वादेतत्काले प्रकटितलीलामध्यपातिनां तदननुभनाद्भगवतश्च सर्वज्ञत्वेन तल्लीलाया अप्यनुभवविषयत्वात् सर्वोपपत्तेः । नैकविंशः । लीलानित्यत्वं न केवलं लौकिकयौक्तिकं, किन्तु, जयति जननिवास इत्याद्युक्तस्मृतिश्रुतिप्रमाणतस्तथैव सिद्धत्वात् । किन्तु स्वबुद्धिपरिकल्पिता तत्राऽनुपपत्तिः । सा चैवं परिहरणीया । रसो वै स इति श्रुत्या सर्वरस इति श्रुत्या च भगवतः सर्वरसरूपत्वं निर्विवादम् । तथाच यत्र यदा वदत्येष्यामीति तेषां भक्तानां तत्कालीनभगवदागमनविषयकपरमार्तिलक्षणरसपोषाय तथोक्ते मद्गृहे सर्वथा समागमिष्यति प्रियस्तत्र चैवमेवं मन्मनोरथपूर्त्तिर्भविष्यतीति निश्चयेनाऽमन्दानन्दरूपा रसभावविशेषाश्चातिविलक्षणास्तदा भक्तेपूत्पद्यन्ते । भगवतश्च तद्भावदर्शनजनितस्तत्समयानुरूपो भावविशेषः । परमानन्दरूपोऽनुभवविषयो भवति । तथाच पूर्वोक्तश्रुत्या स्वरूपात्मकमेवेमं रसं सदैवानुभवतीति सिद्धम् । पूर्वोक्तभक्तगृहगमने च पूर्वमवधिङ्कृत्वा तत्समयमतिक्रम्यानातिक्रम्य वा समागते प्रियतमे ये रसात्मका भावविशेषास्ताँस्तथाभूतः सन्नुक्तन्यायेनाऽऽत्मरूपानेवानुभवति । अत्र च पूर्वोक्तानामेतेषाञ्च भेदो न शङ्कनीयः । यतः पूर्वं मह्यमेवमुक्तमासीदित्यनुसन्धान एव तथा रसोत्पत्तिर्नान्यथा ।

तथाच तस्य तस्य रसस्य तादृक्तादृग्रूपत्वाद्रसस्य भगवद्रूपत्वाद्यत्र यो रसो यादृशो यावद्विधः स्वशास्त्रसिद्धस्तत्र तादृशस्तावद्विधः स रसो भगवानेवेति फलितम् । भगवाँश्चैक एव । तथाच तत्रत्या

सर्वा सामग्री तद्रसरूपैवेति सर्वमनवद्यम् । तथाच क्षपाणां तदा प्रदर्शनं तन्नित्यत्वे एव घटते । अग्रिम—रमणलीलाया अपि नित्यत्वे कथमेतद्व्रतफलत्वेन वरदानमुपपद्यत इति शङ्काऽप्येतनैव निरस्ता वेदितव्या । भगवतः सर्वरसरूपत्वेनैव सर्वोपपत्तिरित्युक्तत्वात् । इयमेवोपपत्तिः श्रीनन्दयशोदयोस्तादृशलीलानन्दानुभवे को हेतुरिति, नन्दः किमकरोद् ब्रह्मन् ! श्रेय एवं महोदयम्* यशोदा च महाभागा पपौ यस्याः स्तनं हरिरित्यादिना राज्ञा प्रश्ने कृते, द्रोणो वसूनां प्रवरो धरया सह भार्यया * करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह ॥ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ। भक्तिः स्यात् परमा लोके ययाऽञ्जो दुर्गतिं तरेत्॥ अस्त्वित्युक्तः स एवेह व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धराऽभवत् ॥ ततो भक्तिर्भगवति पुत्रीभूते जनार्दने । दम्पत्योर्नितरामासीद् गोपगोपीषु भारतेत्यादिना श्रीशुकेनोत्तरितेऽपि ज्ञेया । एवमेव श्रीदेवकीवसुदेवयोरन्येष्वप्येतादृशेष्वित्यलं विस्तरेण ॥

इति श्रुतिशतैरतिस्फुटतरैरपास्तभ्रमै-
र्विचारभरचातुरीसचिवसत्पुराणैरपि ।
स्फुरद्विहृतिनित्यता मुनिरणायि गोपीपते-
र्मयाऽतिनिजयत्नतः फलतु तेन सैवेह मे ॥

अथेदं विचार्यते ॥ जन्मान्तरसहस्रेषु तपोध्यानेति वाक्यादनेकजन्मसञ्चितसुकृतराशेरतिशयितभगवदनुग्रहभाजनस्य महत्तमचरणरजोऽभिषिक्तस्य कस्यचित् पुरुषविशेषस्य पूर्वोक्तन्यायेन नित्यलीलामध्यपातिभक्तिभावसजातीयभावोत्पत्तौ तद्भावानुसारेणैव च तदभिलाषेण भजने क्रियमाणे तल्लीलामध्यपातित्वमस्य भवति ? न वेति । किमत्र युक्तम् । नेति । कुतः । यत एतस्यापि

तादृशलीलारसानुभवकामनया भगवद्भजनस्य कृतत्वेनैतस्मिन्नपि तादृशीं लीलां हरिः करिष्यतीति भवता वाच्यम् । तथाचैतस्मिन् क्रियमाणाया लीलाया जन्यत्वेन न नित्यत्वं वक्तुं शक्यम् । तेनै-तदर्थमेव क्वचित् प्रकटीभूयास्मै तादृक्सुखं दत्वा स्वस्मिन्नेव प्रवे-शयति तमिति न नित्यलीलायां तस्य प्रवेश इतिचेत् । अत्र ब्रूमः। यथा गौतमीयानां मते सर्वज्ञत्वेनेश्वरस्य सर्वविषयकज्ञानस्यावश्य-वाच्यत्वेन विषयाणां जन्यत्वेऽपि धर्मिग्राहकप्रमाणेन नित्यत्वेनैव सिद्धेस्तथा पूर्वोक्तप्रमाणैर्लीलाया अपि नित्यत्वेनैव सिद्धायास्तस्या एव तादृग्भक्तविषयत्वमात्रस्यैवात्र वाच्यत्वात् तद्विषयिकायास्तस्या अजन्यत्वात्तद्धेत्वासिद्धिः । नच तादृग्भक्तस्यैतद्विषयत्वे मानाभाव इति वाच्यम् । तस्य पूर्वमेवोक्तत्वात् । तथाहि । बृहद्वामनीयकथा-सन्दर्भे स्वस्तुतिसन्तुष्टभगवत्प्रदर्शितस्वरूपाऽवलोकनसञ्जातमनो-रथे श्रुतिभिः, कन्दर्पकोटिलावण्ये इत्यादिना निरूपिते, दुर्लभो दुर्घटश्चैव इत्यादिना भगवद्वरदानं निरूप्य पश्चाद् ब्रह्मवाक्यं निरू-प्यते । उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गता इति । एतदग्रे च पठ्यते । स्त्रियो वा पुरुषो वाऽपि भर्तृभावेन केशवम् * हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशय इति । यद्यपि नगरादपि बहिःस्थितस्यात्यधमस्य कस्यचिन्महाराजान्तःपुरप्रवेशकामनाया-मपि न तत्र प्रवेश सम्भवति, प्रत्युताऽयोग्यमिच्छन् पुरुषः पतत्ये-व न संशय इति वाक्यात् पात एव भवेत् । अत एव भगवता श्रुतिष्वपि, दुर्घट इत्युक्तम् । तथापि, मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हतीत्युक्तया तथा भवदङ्गीकारत एव भवतीति ज्ञायते । सर्वात्मभावेन चेत्तथा भजनं करोति तदा भगवानप्यङ्गी-करोत्येव । अन्यथा, ये यथा मां प्रपद्यन्त इति मर्यादा न स्यात् । अथवा पूर्वोक्तभक्तसम्बन्धिन्या लीलाया वर्त्तमानाया एव यथा

क्रमेणाविर्भावस्तथाऽऽधुनिकभक्तसम्बन्धिन्या अपि तस्या इति नानुपपत्तिः काचित् । अत एव ऋग्वेदेऽपि पठ्यते । विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकारेति। एष विष्णुः क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् । असुरेभ्योऽपहृत्य प्रदास्यन् । एतां सर्वां पृथिवीं विचक्रमे । अत्र हि विष्णुमाहात्म्यमुच्यते । तत्र न हीदमेव महतस्तस्य माहात्म्यं, किन्त्वितोऽधिकमप्यस्तीत्याशयेनाह । ध्रुवास इति । अस्य कीरयः स्तोतारो, जनासो भक्ताः, ध्रुवासो नित्या एवेत्यर्थः । नित्यत्वं तु स्तोत्रेण सन्तुष्टेन भगवता पूर्वोक्तलीलामध्ये तेषाम्पातनेनेति ज्ञेयम् । अन्यथा जीवस्य स्वत एव नित्यत्वेन अस्य कीरयो ध्रुवास इत्यनर्थकं भवेत् । नापि सर्वसम्पत्त्या याच्ञार्थकगमनाभावरूपं कादाचित्कं ध्रुवत्वमत्र वाच्यम् । सङ्कोचे मानाभावात् । तादृशे ध्रुवपदाशक्तेश्च । तस्मादस्मदुक्त एव श्रुतेस्तात्पर्यं वेदितव्यम् । सुजनिमा शोभनानि जनिमानि नामानुकीर्त्तनस्मरणादीनि यस्य एतादृशो विष्णुः, उरुक्षितिं विस्तीर्णनिवासां चकारेत्यर्थः ॥ न द्वाविंशः । अनित्यत्वं लीलासु वदन् वादी प्रष्टव्यः । ध्वंसप्रतियोगित्वं ह्यनित्यत्वम् । तदत्र कुतस्त्वयाऽवधारितमिति । जन्यभावत्वेनेतिचेद् ब्रूयात्तदा स वक्तव्यः । पूर्वाभिव्यक्ताया एतस्याः क्रमेणाविर्भाव एवेति पूर्वमेवोक्तां स्वरूपसिद्धिं किं नानुसन्धत्से इति । न पश्यामीतिचेद् ब्रवीषि तदा स्वाभिमतेश्वरेऽपि तथा ब्रूहि । धर्मिग्राहकप्रमाणेन स तथैव सिद्ध इति तुल्यम् । ननु न तुल्यम् । अत्र धर्मिग्राहकमानेऽपि प्रातःकालीनलीलायाः सायङ्काले बाल्यस्य च पौगण्डादिष्वनिरूपणात् । सत्यम् । तत्र पुनरकाले पूर्वलीलासत्त्वासत्त्वौदासीन्येन लीलानिरूपणं क्रियते । ननु

पूर्वलीलायाः सत्त्वमसत्त्वं वाऽपि निरूप्यते । एवं च सति सन्देहे तन्निवारणपूर्वकं, जयति जननिवासः, बहूनि सन्ति नामानि, बृहद्वामनीयकथा, ता वां वास्तूनि, ते ते धामानि, तद्विष्णोः परमं पदम्, तद्विमासः, ध्रुवासो अस्येत्यादिस्मृतिश्रुतिभिरुक्तरीत्या लीलाया नित्यत्वेऽवधारिते सर्वसमाधानार्थं क्रमेणाविर्भाविताया एव लीलायाः क्रमेण तत्र निरूपणमात्रमिति तत्रापि निर्णयात् कथं न तुल्यत्वम् । न हि प्रतिपदं नित्यत्वं निरूपणीयम् । एकत्र तथा निर्णयस्यैवान्यत्राप्यवगन्तुं शक्यत्वात् । एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथेत्यर्थात् । लीलायाः कर्मरूपत्वेन तस्य चाचिरावस्थायित्वनियमेन न नित्यत्वं वक्तुं शक्यमित्यभिप्रायश्चेद् हन्तैवं ज्ञानस्यापि त्रिक्षणावस्थायित्वनियमेन ज्ञानस्यापि न नित्यत्वं वक्तुं शक्यम् । धर्मिग्राहकप्रमाणाच्चेत् तुल्यं न्यायात् । न चतुर्विंशपक्षाविंशौ । लीलासम्बन्धिपदार्थाः सर्वैः सपद्यनुभूयमाना एव तद्भिन्ना वा । आद्ये तन्नित्यत्वं त्वभिप्रायप्रत्यक्षबाधितम् । क्वचिच्च रत्नबद्धोभयतटीत्यादिश्रूयमाणवैलक्षण्योपलम्भाच्च न तथा वक्तुं शक्यम् । द्वितीये त्वेतेषामपीतरपदार्थसाधारण्येन तल्लीलारसनिमग्नानामेतेष्वेवासाधारणप्रेमानुपपत्तिः । तादृग्भक्तानामेतद्दर्शनादिना तद्रसानुभवेन आह्लादविशेषस्यानुभूयमानत्वेन च न तथा वक्तुं शक्यमित्युभयतःपाशा रज्जुः । नच भिन्नत्वेऽप्यभिन्नत्वाभिमानात्प्रेमाद्युपपत्तिः । दृश्यते हि स्वप्नप्रतीतप्रमदादर्शनादिना पारमार्थिकस्खलनादिरिति वाच्यम् । एवं तादृशाह्लादोपपत्तावपि तत्र तत्र वेणुकिङ्किण्यादिश्रवणतत्सौरभविशेषानुभवप्रदीपाद्यनुभवानां पारमार्थिकानामनुपपत्तेः । न ह्यभिमानमात्रेणोक्तानामनुभवः सम्भवति । अन्यथा जागरितस्यापि प्रमदास्पर्शाद्यनुभवप्रसङ्गः । तादृशेषु भ्रमानुपपत्तिश्चेत्यादिशङ्का । तन्निरासस्तु,

दिवीव चक्षुराततमिति श्रुतिव्याख्यानेनैव कृत इति दिक्। न षड्विंशसप्तविंशौ॥ अत्र प्रभासीयकथायाः कथं सङ्गतिरिति? प्रश्नः। तत्रोच्यते। भगवान् हि सर्वलीलायुतः प्रकटः सदा। तथाच यथा धर्मरक्षा भद्रक्षा देवकार्यकरणं भूभारहरणादिकं भगवल्लीला, तथैवाऽसुरव्यामोहनमपि लीलैव। मोहनं च माययैवेति निश्चयः। एवञ्च सत्यासुरमोहनार्थं या लीला सा मायिकीति मन्तव्या। तस्यां च लौकिकत्वेन सत्यत्वेन ज्ञानेन भगवतोऽपि लौकिकत्वज्ञानमसुराणामेव, न देवानाम्। यतस्तदर्थमेव तत्करणम्। अत एव भगवताऽप्युक्तम्। अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् * परं भावमजानन्तो मम भूतमहेश्वरम्॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति॥ पदाभ्यां, यः प्रकटो दृश्यते तमेवाविकृतं जानन्तो भजन्त इति गम्यते।

अपिच। भगवद्गीतास्वेव, यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः * यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्य इत्युपक्रम्याक्षरस्वप्राप्त्युपायौ निरूप्य, स्वप्राप्तौ च विशेषमुक्त्वा पुनर्भगवतोच्यते। अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे * रात्र्यागमे प्रलीयन्ते तत्रैवाऽव्यक्तसंज्ञके॥ भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥ परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात् सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यतीत्यादि। एतदन्ते च, पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्युक्त्वा परस्य लक्षणमुच्यते। यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततमिति। अत्र च, यः सर्वेषु भूतेषु नश्यत्स्वपि स्वयं न नश्यति तस्यैव लक्षण-

म् । यस्यान्तःस्थानि भूतानीति पदेनोक्तेः । एतल्लक्षणवत्त्वं मृत्स्नाभक्षणजृम्भादिलीलानिरूपणप्रस्तावे पक्षान्तरनिरासपूर्वकं भगवतो दृश्यस्वरूपस्यैव नैसर्गिकधर्मत्वेन दशमस्कन्ध एव निरूपितम् । अपिच । अत्रैव दामोदरलीलाप्रस्तावे तस्मिन्नेवोदरे दाम्नामनवच्छेदकत्वं निरूप्यते । तेन तस्योदरस्यैव ब्रह्मत्वं निरूपितं भवति । उदरस्याब्रह्मत्वे तु दामभिरनवच्छेद्यत्वे देशकालाऽपरिच्छिन्नत्वं ब्रह्मधर्म हेतुत्वेन, नचान्तर्न बहिर्यस्येत्यादिना न निरूपयेत् । व्यधिकरणत्वापत्तेः । तथाच धर्मिग्राहकमानैर्विग्रहस्यैव ब्रह्मत्वं निश्चितमिति तद्विरुद्धधर्माणाममतामेव प्रदर्शनमासुरव्यामोहायेति निश्चीयते । अन्यथाऽनुपपत्तेर्बलिष्ठत्वात् । उक्तं च ब्रह्माण्डपुराणे, अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥ निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते । एतद्विरुद्धं यत् सर्वं तन्मोहायेति निश्चय इति । उक्तं च पद्मपुराणे, अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा ॥ तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ॥ असुराणां विमोहाय दोषा विष्णोर्न हि क्वचिदिति । तथाच पद्मपुराणे पाषण्डप्रवर्तनार्थं वृषध्वजमाज्ञापयता भगवतोक्तं—त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदेति । न ह्यत्राराधकत्वं भगवति सम्भवति । तस्य जीवधर्मत्वात् । तस्य यथा स्वस्मिन्नसत एव प्रदर्शनं लोकव्यामोहाय तथा तस्या अपीति मन्तव्यम् । अपिच, यथेन्द्रजालविद्यायां नटस्य स्वर्गगमनं तत्र युद्धं तेन तन्मरणं मृतस्याङ्गपातस्तत्स्त्रियाश्च सह गमनादिकं पूर्वमनुभूतमपि पश्चात्कालीनतदागमनेन प्रत्यक्षप्रमाणसिद्धेन मायिकमिति निश्चीयते । तथा, जगति जननिनाम इत्याद्युक्तस्मृतिश्रुतिभिः पूर्वपूर्वलीलाया नित्यत्वं सिद्धमित्यनन्यगत्यैवास्या लीलायाः प्रदर्शनमात्रपरत्वमध्यवसेयम् । न चैतदनुरोधेन पूर्वलीला-

नामेव तथात्वं वक्तुं शक्यम् । तासामुक्तप्रमाणैर्नित्यत्वेनैव सिद्ध-त्वात् । नचोक्तदृष्टान्तन्यायेन पूर्वं तथा सिद्धमपि पश्चाद् बाध्य-मिति वाच्यम् । तत्र लौकिकत्वेन प्रमाणस्य दोषस्यापि सम्भवे-ऽपि प्रकृते दोषासम्भवात् । अत्र पूर्वोक्तन्यायेन लीलानामन्यो-न्यं बाध्यबाधकभावाभावेन तथा वक्तुमनवसरश्चेत्यलं विस्तरेण । नाऽष्टाविंशः । एतेनैव, यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणा-दिभिः * नश्वरं गृह्यमाणं तद्विद्धि मायामनोमयमिति भगवद्वाक्यं लीलामध्यपात्यन्तरङ्गभक्तं प्रत्युक्तमिति न वास्तवत्वं कस्याप्यर्थस्य वक्तुं शक्यमिति कुचोद्यमपि निरस्तम् । उक्तरीत्याऽसुरव्या-मोहाय प्रदर्श्यमानानामर्थानामेव, यदिदमित्यादिना कथनात् । अन्यथा नश्वरमिति नोक्तं स्यात् । गृह्यमाणमित्येतावतैव सर्वप्राप्तेः। एवं सति द्विजशापेन नश्वरमिति गृह्यमाणं तथेत्यर्थः पर्यवस्यति । अत एव, यदिदं मनसा वाचा गृह्यतेऽन्यैरपीन्द्रियैः * अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसेति भगवता हंसस्य वचन गीयते ॥

अत्र विद्वद्भिरेवं ज्ञेयम् । आदौ निगूढाशयेन शुकदेवेन, भूभारराजपृतना इत्युपक्रम्य, सञ्जह्रेऽस्वकुलं विभुरित्यन्तेन मोहिका लीला सामान्यत उक्ता । अत्र अस्वकुलमिति निगूढः पदच्छे-दो ज्ञेयः । वास्तव्यां नैसर्गिक्यां लीलायां भुवि प्रकटतया सत्यां कथमेवं सम्भवतीति शङ्कानिरासाय स्वमूर्त्येति द्वयेनाग्रे भुवि लीलाप्राकट्यप्रयोजनाभावं ज्ञापयितुं लीलाप्राकट्यप्रयोजननि-ष्पत्तिकथनपूर्वकं सर्वादृश्यत्वलक्षणं पदमगादित्युक्तम् ।

अग्रे च ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपजीविनाम् * विप्र-शापः कथमभूद् वृष्णीनां कृष्णचेतसामितिराजप्रश्नवाक्यव्याजेन नित्यलीलामध्यपातियादवस्वरूपनिरूपणेन प्राप्तशापानां तद्भिन्नत्वं ज्ञापितं व्यासेन । बिभ्रद्वपुः सकलसुन्दरसन्निवेशं कर्माचरन् भुवि

सुमगलमाप्तकामः * आस्थाय धाम रममाण उदारकीर्त्तिः संहर्तु-मैच्छत कुलं स्थितकृत्यशेष इत्युत्तरे तु स्वरूपं लीलां च भुवि प्रकटी-कुर्वन् प्रयोजननिष्पत्तिं ज्ञात्वा धाम सहजं नित्यं पल्लीलास्थानं तदेवास्थाय रममाण एव, स्थितकृत्यशेषः— स्थितोऽग्रिमासुर-व्यामोहलक्षणः कृत्यशेषो यस्य तादृशः कुलं संहर्तुमैच्छतेत्यनेन शुकैरुक्तम् । तेनास्य कुलस्य मायिकत्वं सिद्ध्यति । कृत्यसिद्धिर्य-तस्तथैव भवति । भुवीति पूर्वमुक्तमेवेति तद्भिन्नमेव धाम वाच्यम् । तदुक्तमस्माभिः । अग्रेऽपि कालात्मना निसृष्टा मुनय इत्युक्तं, न तु पूर्वलीलाकर्त्रेति । मन्त्रभागवतकृताऽपि भगवल्लीलापरत्वेन बहुशः श्रुतयो व्याख्याताः । वस्तुतस्तु सर्वेऽपि वेदा भगवल्लीला-ऽऽवेदकाः, बन्दिनस्तत्पराक्रमैरिति श्रुतिगीतावाक्यात् । एवंविध-त्वाल्लीलायाः । श्रीविठ्ठलनाथदीक्षितैर्दानलीला, व्रतचर्या, तट्टीका च पितृचरणैः कृता । तेन, काव्यादीनामसत्त्वान्नोपयोगः कथञ्चने-ति निबन्धात् काव्यकरणं विरुद्धमिति कुचोद्यं निरस्तं वेदितव्यम् ॥ नन्वेवं सति धर्मकृतं द्वैतं भवतीति सिद्धान्तभङ्गापत्तिरिति चेन्न । स्वकृ-तभेदस्य सिद्धान्तेऽङ्गीकारेण भेदाभेदयोः स्वीकाराद्द्वैताभावात् । तथाहि । एकस्यैकत्वमस्तीति प्रमाणादवगम्यते * नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥ यत् प्रमाणैः परिच्छिन्नमविरुद्धं हि तत्तथा । वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते । न ह्यभिन्नं भिन्न-मेव वा क्वचिद्दर्शयितुं शक्यते । सत्ताज्ञेयत्वद्रव्यत्वादिसामान्या-ऽऽत्मना सर्वमभिन्नं, व्यक्त्यात्मना तु परस्परवैलक्षण्याद्भिन्नम् । तथाहि । प्रतीयतेचेदुभयं विरोधः कोऽयमुच्यते * विरोधे चा-ऽविरोधे च प्रमाणं कारणं न हि ॥ एकरूपं प्रतीत्या च द्विरूपं त-त्तथेष्यताम् । एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥

ननु शीतोष्णयोर्यथा परस्परं विरोधस्तथा भेदाभेदयोः कि-

मिदमुच्यते, नास्ति विरोध इति । अत्रोच्यते । भवतः प्रज्ञापराधोऽयं, न वस्तुविरोधः।कथम्।सहानवस्थानं नाम छायातपवद्भिन्नदेशवर्त्तित्वं वा शीतोष्णवद्विरोधो वा । एतदुभयमिह कार्यकारणयोर्ब्रह्मप्रपञ्चयोर्ब्रह्मतद्धर्मयोश्च नास्ति । येन भेद एव स्यात् । तत उत्पत्तेस्तत्रैव प्रलयात् । विरोधे हि त्रयमेतन्नोपपद्यते । न हि कृशानुनाङ्कुरोत्पत्त्यादिलक्षणः सम्बन्धो दृश्यते । कारणेन हि मृत्सुवर्णादिना कार्यं सर्वदाऽनुस्यूतं दृश्यते । अतो ब्रह्मणः समवायिकारणभावादुत्तरयोरभेदोऽपि । तत्राक्षिणी निमील्य परस्परासङ्गतिलक्षणो विरोधो वैयात्याद्वक्तव्यो भवेत् । प्राथमिकश्रोत्रियश्रोत्रप्रतारणार्थं वा । अयं च न भेदेऽभेदे वा निमित्तमिति शीतोष्णयोर्भिन्नाधारवर्त्तिनोर्न कदाचिदुत्पाद्योत्पादकलक्षणः सम्बन्धो नाधाराधेयलक्षण इति युक्तस्तयोः परस्परविरोधः। तस्माच्छीतोष्णवदिति अयुक्तं दृष्टान्ताभिधानम् ॥ अत्र प्रागल्भ्यात् कश्चिदाह । यथा संशयज्ञानं स्थाणुर्वा पुरुषो वेत्यप्रमाणं तथा भेदाऽभेदज्ञानमिति । तदसत् । परस्परोपमर्देन न कदाचित् सहस्थितिः * प्रमेयानिश्चयाच्चैव संशयस्याप्रमाणता ॥ अत्र पुनः कारणं पूर्वसिद्धं मृत्सुवर्णादिलक्षणम् । ततः कार्यं पश्चाज्जायमानं तदाश्रितमेव जायते।कारणसमानार्थतया हि कार्यबुद्धिः।न कारणस्वरूपोपमर्देन देशतः कालतो वा पृथग्भूतं कार्यं दृश्यते । तस्मान्न किञ्चिदेतत् । तदयं संग्रहश्लोकः—

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदेति ॥

अत्र वाचस्पतिमिश्रा उक्तां कारिकामुपन्यस्याहुः। कः पुनरयं भेदो नाम यः सहाभेदेनैकत्र भवेत् । परस्पराभाव इतिचेत् । किमयं कार्यकारणयोः कटकहाटकयोरस्ति न वा।नचेदेकत्वमेव

वास्तवं, न भेदः। अस्तिचेद्भेद एव, नाभेदः। नच भावाभावयोरविरोधः। सहासम्भवात्। सम्भवे वा कटकवर्द्धमानकयोरपि तत्त्वेनाभेदप्रसङ्गः। भेदस्याभेदाविरोधात्। अपिच। कटकहाटकत्वेनैवाऽभेदो, न कटकत्वेन। तेन तु भेद एव कुण्डलादेः। यदि हाटकादभिन्नः कटकः, कथमयं कुण्डलादिषु नानुवर्त्तते। नानुऽवर्त्तते चेत् कथं हाटकादभिन्नः। यो हि यस्मिन्ननुवर्त्तमाने व्यावर्त्तते ततो भिन्न एव। यथा सूत्रात् कुसुमभेदः। नानुवर्त्तन्ते चाऽनुवर्त्तमानेऽपि हाटकत्वे कुण्डलादयः। तस्मात्तेऽपि हाटकाद्भिन्ना एवेति। सहानुवृत्त्या च सर्ववस्त्वनुगमे। इदमिह नेदमस्माद्भेदमिदमिदानीं नेदमिदमेवं नेदमेवमिति विभागो न स्यात्। कस्यचित् क्वचित् कथञ्चिद्विवेकहेतोरभावात्। अपिच, दूरात् कनकमित्यवगतेन तस्य कुण्डलादयो विशेषा जिज्ञास्येरन् कनकादभेदात् तेषाम्। तस्य च ज्ञातत्वात्। अथ भेदोऽप्यस्ति कनकात् कुण्डलादीनामिति कनकावगमेऽपि अज्ञातास्ते। ननु भेदोऽप्यस्तीति किं न ज्ञाताः। प्रत्युत ज्ञानमेव तेषां युक्तम्। कारणाभावे हि कार्याभाव औत्सर्गिकः। स च कारणतयाऽपोद्यते। अस्ति चाभेदे कारणात्मतेति। कनके ज्ञाते ज्ञाता एव कुण्डलादय इति तज्जिज्ञासाज्ञानानि च अनर्थकानि स्युः। तेन यस्मिन् गृह्यमाणे यन्न गृह्यते तत् ततो भिद्यते। यथा करभे गृह्यमाणे अगृह्यमाणो रासभः करभात्। गृह्यमाणे च दूरतो हेम्नि न गृह्यन्ते तस्य भेदाः कुण्डलाऽऽदयः। तस्मात्ते हेम्नो भिद्यन्ते। कथं तर्हि सुवर्णमेव कुण्डलमिति सामानाधिकरण्यमितिचेन्न आधाराधेयभावे समानाश्रयत्वे वा सामानाधिकरण्यमित्युक्तम्। अथानुवृत्तिव्यावृत्तिव्यवस्था च हेम्नि ज्ञाते कुण्डलादिजिज्ञासा च कथम्। न खल्वभेद ऐकान्तिकेऽनैकान्तिके चैतदुभयमुपपद्यते यत इत्युक्तम्। तस्माद्भेदाभेद-

योरन्यतरस्मिन्नहेये अभेदोपादानैव भेदकल्पना, न भेदोपादाना अभेदकल्पना इति युक्तम् । भिद्यमानतन्त्रत्वाद्भेदस्य भिद्यमानानां च प्रत्येकमेकत्वात् । एकाभावेनाऽनाश्रयस्य भेदस्यायोगात् । एकस्य च भेदानधीनत्वात् । नायमिति च भेदग्रहस्य प्रतियोगिग्रहसापेक्षत्वादेकत्वग्रहस्य चान्यानपेक्षत्वादभेदोपादानैवानिवर्चनीयभेदकल्पनेति साम्प्रतम् । तथाच श्रुतिः, मृत्तिकेत्येव सत्यमिति । तस्मात् कूटस्थनित्यतैव पारमार्थिकी, न परिणामिनित्यतेति सिद्धमिति ॥

तदनवधानाविजृम्भितमेव । उक्ते मते भेदाभेदयोर्नानात्वैकत्वरूपतया भेदस्यान्योन्याभावरूपत्वानङ्गीकारेण तदादाय तन्मतदूषणस्य गगनकुसुमसौरभ्यकल्पत्वात् । परस्पराभावरूपत्वेऽपि घटतदन्यन्ताऽभावयोर्घटतद्भेदयोश्च भूतल एव सहावस्थानदर्शनेन तस्य तदभावेनाभेदेन सह न विरोधः । अत्यन्ताभावस्य नित्यव्यापकत्वेन सर्वत्र सत्त्वात् । प्रतियोग्यानयनोत्तरं तदभावबुद्धिप्रतिबन्धमात्रं परम् । एवं सति यत्र भेदस्तत्राप्यभेदो वर्तत एवेति तयोः सहासम्भवाद्विरोधकथनस्यापि तथात्वम् । एवं सम्भवेत्यादिना कटकवर्द्धमानकयोरभेदप्रभञ्जनस्याऽपि तथात्वम् । यदपि कटकस्य हाटकादित्यादिना कटकादीनां हाटकाद्भेदव्युत्पादनं, तदपि तथा । तेषां तदवस्थारूपत्वात् । अवस्थानां च अवस्थावतः सकाशतो भिन्नाऽभिन्नत्वात् । पयां समुद्रतरङ्गयोस्तथात्वस्य शङ्कराचार्यैरेवोक्तत्वात् । अतः परं सहानुवृत्त्यादिनोक्तो दूषणत्वेन प्रतीतिविरोधो वक्तव्यः । स चेद्भिद्यमानोऽपि कुण्डलत्वादिना भेदेन कनकत्वेनाभेदः प्रतीयते तदा न प्रतीतिविरोधोऽपि । प्रमाणेनाऽधिगमात् । प्रमिते च तस्मिन् दूरात् कनकमित्यादिनोक्तानां विकल्पानामनवसरपराहतत्वादिति, प्रतीयते चेदुभयमिति कारिकयैवोक्तं व्युत्पादितं

च । अतो मुकुटकटकादीनामवस्थात्वेन हेमसामानाधिकरण्यस्य सामयिकत्वेन च व्यावृत्तिव्यवस्थाजिज्ञासाजनकत्वयोरुपपत्तेर्भेदस्यागन्तुकत्वमेव, न त्वनिर्वचनीयत्वम् । न च श्रुतिविरोधः । उक्तश्रुतौ परिणामिनो मृदादीनेव दृष्टान्तीकृत्य, एवꣲ सोम्य स आदेशो भवतीति दार्ष्टान्तिकेऽतिदेशेन परिणामिनित्यताया एव श्रुत्यभिप्रेतत्वात् । नचात्र कारणे सत्यत्वं, कार्ये वाचारम्भणत्वस्य चोक्तत्वेन कार्यमिथ्यात्वसिद्धौ कूटस्थनित्यत्वमेव सेत्स्यतीति वाच्यम् । घटः पट इति वाचारम्भणरूपस्य विकारस्यैव नामधेयत्वविधानेन नामधेयस्य विकारत्वविधानेन वा स्वरूपमिथ्यात्वस्य श्रुत्यनभिप्रेतत्वात् । यदि कार्यस्वरूपस्यापि वाङ्मात्रतामभिप्रेयाद्वाचारम्भणं नामधेयमिति पदद्वयं न ब्रूयात् । एकेनैव चारितार्थ्यात् । इदं यथा तथा तदनन्यत्वाधिकरणे प्रपञ्चितम् । तत्र सिद्धान्ते यो विशेषः स उच्यते । अस्य भेदस्य ब्रह्मेच्छयोक्तत्वेनाविद्याकृतत्वाभावः । तत्कृतत्वेन ब्रह्मणोऽपि जीवतुल्यत्वं स्यादिति । अत एव फलाध्याये, ब्राह्मेण शरीरेण भोग इति जैमिनिः, चिन्मात्रेण भोग इत्यौडुलोमिः, भोगान्यथानुपपत्त्या शारीरमिति सिद्धान्तः । विस्तरस्तु तत्रैव द्रष्टव्यः ॥

नन्वविद्यानिवृत्तेः फलत्वं वक्तव्यं, न तु स्वरूपस्य । अजन्यत्वात् । तत्र च साधनानाम् अनुपयोगेन तदुपदेशवैयर्थ्यप्रसङ्गाच्च । नचाऽविद्यानिवृत्तेर्जन्यत्वे कदाचित् तन्नाशः शङ्क्यः । ध्वंसरूपत्वात् । अत एव जन्यभावत्वेन नश्वरत्वेन व्याप्तिराद्रियते, न तु केवलं जन्यत्वेन । ततश्च साधनसाध्यो मोक्षः । अविद्यानिवृत्तिरूप एवेत्यऽविवादम् । तत्र साधनविचारे यद्यपि दर्शनान्तराऽभिमानिभिः साधनान्तराणि कर्मसमुच्चितनत्त्वद्विधज्ञानरूपाण्युक्तानि तथाऽपि श्रौतेऽस्मिन् वेदान्तदर्शने केवलं ज्ञानमेव साधनम् ।

अविद्याया अज्ञानरूपत्वस्य साधितत्वात् । विवक्षितज्ञानमात्रेणैव तन्निवृत्तिसिद्धौ साधनान्तराणां समुच्चयस्य चापार्थत्वात् । ततो ज्ञानोपयोगित्वेनैव वेदान्तानामऽध्यारोपवादपक्षमपहाय स्वार्थ-परत्वेन व्याख्यानं नाभियुक्तजनरुचिरम् । अतो यथाकथञ्चिद्व्या-ख्यानेऽपि ज्ञानोत्पत्त्या अज्ञाननिवृत्तौ ब्रह्म वेद ब्रह्मैव भवतीति स्वरूपावस्थानात्मकपुरुषार्थसिद्धेरमत्यूहत्वात् । नैवम् । भवद्-भाष्ये न्यायसूत्रोपन्यासेनाविद्यानिवृत्तेर्ध्वंसरूपत्वादनश्वरत्वं यद्-ऽसूचि, तदाश्रमवासिके भारतीये पर्वणि महता प्रबन्धेन, त्यक्त-देहानां कुरुपाण्डवसैन्यानां व्यासेन पुनर्दर्शितानां स्वस्वपत्नीभिः सहैकरात्रिकृतविहाराऽऽमन्त्रणादिकथनाद् ध्वंसस्याप्यऽनश्वरत्वं प्रायिकमेव, न तु नियतम् । तद्वद् अविद्यानिवृत्तेरपि स्वप्नप्रबोध-न्यायेन च निवृत्तिसम्भवाज्ज्ञानश्वरत्वम् । गुणानामन्योन्याभि-भवजननमिथुनवृत्तितया सत्त्वेन रजस्तमसोरिव ताभ्यां सत्त्व-स्याभिभवे पुनरप्यविद्योत्पत्तिसम्भवादसङ्गतम् । अतस्तद्विहाय श्रौत एव ब्रह्मप्राप्तिरूपः पुरुषार्थ आदर्तव्यः । नच तस्य नश्व-रत्वं शङ्क्यम् । न स पुनरावर्त्तत इति ब्रह्मप्राप्त्याऽनावृत्तिबोध-नेन तस्या अनश्वरत्वनिश्चयात् । जन्यभावत्वेन नश्वरत्वेन व्याप्ते-र्लौकिकत्वबोधनायैव सूत्रे शब्दादित्यस्य हेतोरुपन्यासात् । नच ब्रह्मणः सर्वगतत्वेन नित्यप्राप्तस्वरूपत्वादनाप्यत्वं शङ्क्यम् । आप्तस्वरूपत्वस्य मोक्षरूपत्वेऽपि गीतावाक्ये आप्तिस्वरूपविवरणेन इदानीं तस्याभावादाप्यत्वतरयापि सत्त्वात् । एतदर्थापत्त्यैवा-न्तस्त्वबहिष्ट्वयोरपि तत्र मन्तव्यत्वात् । नच श्वेताश्वतरोपनिषदि, भूयश्चान्ते विश्वमायानिवृत्तिरिति मायानिवृत्तेर्मोक्षरूपत्वश्रवणाद् अविद्यानिवृत्तेरप्यनश्वरत्वं श्रौतत्वञ्च शङ्क्यम् ।

मायाविद्ययोर्भेदात् । विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् *

मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते इति भगवता तयोः कार्य-कारणभावबोधनात् । माया चाविद्या च स्वयमेव भवतीति तापनीयश्रावितद्वैरूप्यपक्षेऽपि तयोर्भेदेन तन्नाशयोरपि भिन्नत्वान्माया-निवृत्तेरेव मोक्षत्वं, नाविद्यानिवृत्तेः । मायानिवृत्तिश्च मोक्षस्य पूर्वकक्षेति परममोक्षत्वं ब्रह्मप्राप्तेरेव निश्रेयम् । तदेतदुक्तं समन्वया-ऽधिकरणभाष्ये, ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मविदाप्नोति परं, न स पुनरावर्त्तते, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्, अनावृत्तिः शब्दादित्येवमादिभिः श्रुतिस्मृतिन्यायैर्ब्रह्मप्राप्तेरेव पुरुषार्थत्वमिति । यदपि मोक्षस्य स्वात्मस्वरूपत्वेनाऽनाप्यत्वमुक्तं, यच्च ब्रह्मणोऽविद्याशाबल्यादज्ञानवत्त्वं तदप्यसङ्गतम् । ब्रह्म पुनर्न जीवस्यात्ममात्रम् । अज्ञानवद्वा । एकस्यैव ममांशस्य जीवस्यैव महामते * बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतर इति वाक्ये जीवस्यांशत्वकथनेन स्वस्यांशित्वं बोधयता भगवता ब्रह्मणो जीवाऽऽत्ममात्रत्वे निवारिते मोक्षस्य आत्मरूपत्वेन अनाप्यत्व-निवारणात् । जीवस्याविद्यया बन्धकथनेन ब्रह्मणोऽविद्यावत्त्वस्यापि निवारणात् । अतः श्रौतानां स्मार्त्तानां च ब्रह्मविषयाणां साधनानां चित्तकषायशोषण एव पर्यवसानात्तैरतिशुद्धे चित्ते परमव्योमात्मके सति तत्राविर्भूतस्य ब्रह्मणः सोऽश्नुत इति श्रुत्युक्तं सायुज्यमेव सर्वोत्कृष्टः पुरुषार्थो, ध्वंसाप्रतियोगित्वात् । न तु ब्रह्मात्मात्वगतिमात्रम् । अतस्तादर्थ्येन 'यथाकथञ्चिद्व्याख्यानं न प्रामाणिकपदवीमधिरोहतीति दिक् ॥

यत्तु प्रेमरसायनकारः— अलब्धलब्धेरिच्छा तु पुमर्थो न यदि स्वतः * लब्धुमीप्सा पुमर्थः स्याद् बलुव्यो गुरवोऽत्र नः ॥ सुखदुःखासयाद्भिन्ने प्रेम्णि चेन्न पुमर्थता । सममज्ञाननाशेऽपि सुखे सिद्धे न साध्यता,इतीच्छायाः पुमर्थतामाह । तन्न । इच्छायाः प्रेम-

त्त्वाभावात् । उपपादितं चैतत् प्रमेयप्रकरणे । यदपि—तस्मादविद्यास्तमयो नित्यानन्दप्रतीतः * निःशेषदुःखोच्छेदाय पुरुषार्थः परो मत इति निर्विशेषसुखमेव पुरुषार्थ इति मतम् । तन्न । निर्गुणपदार्थस्यैवाभाव इत्युक्तम् । कश्चित्तु न तत्र स्वभावतः सुखात्मता पुरुषार्थः । सुखी स्यामितिवत् सुखं स्यामितीच्छाया अदर्शनात् । स्वतः पुरुषार्थे चेच्छाया अनियतत्वात् । अन्यथाऽऽत्मनाशादेरपि बौद्धादिनियमितेच्छया पुमर्थः स्यात् । अत एव न परकीयं सुखं पुरुषार्थः । तथेच्छाभावात् सुखे तद्गौरवाच्च । सुखसाधने परकीयपुरुषार्थत्वस्यापरकीयेऽप्यस्वकीये अपुरुषार्थत्वस्य दर्शनेन इष्टत्वाविशेषात् । सुखेऽपि तत्कल्पनाच्च । दुःखातत्साधनयोः स्वकीयतयैवापुमर्थत्वस्य दर्शनेन सुखादेरपि तथैव पुमर्थत्वाच्च । तन्मते अपरकीयेन मुक्तस्वरूपसुखेन संसारिणः सुप्तचैत्रस्वरूपसुखेन जाग्रतो मैत्रस्य च पुरुषार्थप्रसङ्गाच्च । नापि सुखापारोक्ष्यं पुरुषार्थः । ईश्वरादीनामस्मदादिसुखदुःखापारोक्ष्येणार्थानर्थप्रसङ्गात् । एतेनोपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात् सुखमप्युपलब्धमेव पुरुषार्थो, न तु स्वसम्बद्धं, गौरवात् । सम्बन्धस्त्वनित्यत्वसाधनपारतन्त्र्यादिवदवर्ज्जनीयसन्निधिरिति विवरणोक्तं प्रत्युक्तम् । परकीयसुखासाधनस्योपलभ्यमानस्याप्यपुरुषार्थत्वाच्च । सुखं मे स्यादिति सम्बन्ध इवानित्यत्वादौ प्रार्थनाऽभावाच्च । नाप्यपरकीयसुखसाक्षात्कारः पुरुषार्थः । सुषुप्तिस्वरूपसुखसाक्षात्कारादिना ईश्वरादेः पुरुषार्थत्वप्रसङ्गात् । किञ्च, अपरकीयसुखस्य साक्षात्कारो नाम न स्वसम्बद्धः स्वस्य पुरुषाऽर्थः । परं प्रति तस्यापुरुषार्थत्वापत्तेः । नाप्यपरकीयसुखसाक्षात्कारः । स्वेतरासंबद्धः स्वस्य पुरुषार्थ उक्तस्वरूपेण सुखानुभवेन संसारीतरासम्बद्धेन संसारिणः पुरुषार्थत्वप्रसङ्गात् । नाप्यपरकीय-

सुखानुभवरूपेच्छा पुरुषार्थः । तादृशेच्छायाः कदाप्यदर्शनात् । एतेन प्रसक्तप्रकाशमानं स्वकीयं सुखं पुरुषार्थ इत्यानन्दबोधोक्तं निरस्तम् । किञ्चासुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुमऽर्थता । अतिरेके सद्वितीयत्वम् । अपिचात्मनः सुखमात्रत्वे प्रकाशमात्रत्वे च सुखप्रकाशाभावेनाऽपुमर्थत्वम् । उभयात्मत्वे वाऽखण्डत्वहानिः । किञ्च, दुःखाभावस्य सुखस्य च तत्त्वतो दुःखाच्छेदेऽपसिद्धान्तः, अभेदे त्वपुमर्थता । किञ्च, स्वप्रकाशस्य सुखस्य स्वतः स्फुरणेऽपि दुःखाभावस्यास्फुरणादऽपुमर्थतेत्याह । तदपि युक्तम् । एतेन भक्तेर्विषयोऽपि दर्शित इति दिक् ॥

इति श्रीविद्वन्मण्डन–गोकुलोत्सवात्मजगोपेश्वरविरचिते
भक्तिमार्तण्डे फलप्रकरणं समाप्तिमगमत् ॥ ४ ॥

## मुद्रित पुस्तक नाम । प्रथमविभाग ॥ १ ॥

१५ मीमांसाबालप्रकाशः । २)
१६ प्रकरणपञ्चिका । मीमांसासारसंग्रहश्च । ३)
१७ अद्वैतसिद्धिसिद्धान्तसारः । वेदान्त । ३)
१८ कात्यायनश्रौतसूत्रम् । कर्काचार्यकृतभाष्यसहितम् । १३)
१९ ब्रह्मसूत्रभाष्यम् । भास्कराचार्यकृतम् * १)
२० खण्डनखण्डखाद्यम् * ९)
२१ आख्यातचन्द्रिका । व्याकरण । १)
२२ श्रीलक्ष्मीसहस्रम् । सटीक । काव्य । ८)
२३ शब्दकौस्तुभ * स्फोटचन्द्रिका च । व्याकरण । १०)
२४ क्रोडपत्रसंग्रह * । न्याय । १)
२५ ब्रह्मसूत्रवृत्तिः । सिद्धान्तजाह्नवी । सेतुसहिता । चतुःसूत्री । २)
२६ षड्दर्शनसमुच्चयः । १)
२७ वैयाकरणभूषणसारः । दर्पण सहितः । २)
२८ जागदीशी । न्याय अनुमानखण्ड । १३)
२९ वीरमित्रोदयः * । धर्मशास्त्र । ७)
३० स्मृतिसारोद्धार * । धर्मशास्त्र । २)
३१ नैष्कर्म्यसिद्धिः । ब्रह्मामृतम् । वेदान्त । ४)
३२ वेदान्तरत्नमञ्जूषा श्रीनिम्बार्कदशश्लोकीव्याख्या । २)
३३ ऋक्प्रातिशाख्यम् । ४)
३४ बृहद्वैयाकरणभूषणम् । पदार्थदीपिका च । व्याकरण । ४)
३५ गूढार्थदीपिका । श्रीमद्भागवत रासपञ्चाध्यायीव्याख्या । ३)
३६ विवरणोपन्यासः । वाक्यसुधा । वेदान्त । २)
३७ श्रीभाष्यवार्तिकम् । यतीन्द्रमतदीपिका च । वेदान्त । २)
३८ तत्त्वदीपनम् । वेदान्त । ८)
३९ रसमञ्जरी । व्यङ्ग्यार्थकौमुदी तथा प्रकाशसहिता । ३)
४० भेदधिक्कार । उपक्रमपराक्रमश्च । वेदान्त । २)
४१ तत्त्वशेखर । तत्त्वत्रयचुलुकसंग्रहश्च । वेदान्त । १)
४२ पातञ्जलयोगदर्शनम् । मणिप्रभा सहितम् । १)
४३ बोधसारः । सटीक । वेदान्त । १०)
४४ व्याकरणमिताक्षरा । १०)
४५ ब्रह्मसूत्रदीपिका । २)

| | | |
|---|---|---|
| ४६ | दैवज्ञकामधेनुः । ज्यौतिष । | ३) |
| ४७ | प्रौढमनोरमा शब्दरत्न । व्याकरण । | ६) |
| | अव्ययीभावपर्यन्त । | २) |
| ४८ | परिभाषेन्दुशेखरः । भैरवीसहित । | १) |
| ४९ | विशिष्टाद्वैताधिकरणमाला । सटीक । | १) |
| ५० | श्रुत्यन्तसुरद्रुमः । श्रुतिसिद्धान्तमञ्जरी च । | ३) |
| ५१ | काव्यालङ्कारसूत्रवृत्तिः । सटीक । | २) |
| ५२ | आश्वलायनसूत्रप्रयोगदीपिका । | २) |
| ५३ | अद्वैतचन्द्रिका । | ॥) |
| ५४ | लघुशब्देन्दुशेखर । अव्ययीभावपर्यन्त । | १।) |
| | सैव संपूर्ण | ४) |
| ५५ | अर्थसंग्रह । सटीकः । ( मीमांसा ) | १॥) |
| ५६ | भाट्टभाषा । प्रकाशसहिता ( मीमांसा ) | ॥) |
| ५७ | प्राकृतप्रकाशः । वररुचिकृत । भामहकृतव्याख्यासहित । | ॥) |
| ५८ | भगवद्गीता । मधुसूदनटीका सहिता । | ३) |
| ५९ | व्युत्पत्तिवादः । मूलम् | १॥) |
| ६० | भैरवी । शब्दरत्नव्याख्या ( कारकान्ता ) | ३) |
| ६१ | परमलघुमञ्जूषा । | ।) |
| ६२ | साङ्ख्यतत्त्वकौमुदी । | ।=) |
| ६३ | नारदसंहिता ( ज्योतिषम् ) । | ।=) |
| ६४ | मेदिनीकोषः । | ।॥=) |
| ६५ | पूर्वपक्षावली । | ।) |
| ६६ | उत्तरपक्षावली । | ।) |
| ६७ | मीमांसापरिभाषा । | ।) |
| ६८ | कारिकावली । रामरुद्री दिनकरी मुक्तावली शब्दखण्डान्ता | ३) |
| ६९ | कालीशङ्करी जागदीश्याः पञ्चलक्षण्या । | ≡) |
| ७० | सैव—माथुरी पञ्चलक्षण्याः । | =) |
| ७१ | मीमांसान्यायप्रकाश । आपोदेवकृतः । | ॥=) |
| ७२ | चरणव्यूहः—सभाष्य शौनकीय परिशिष्ट सहित । | ।=) |
| ७३ | योगदर्शन व्यासभाष्य तत्त्ववैशारदी टीकासह बालराम-स्वामिकृत टिप्पणीसहित | ३) |

* ये चिह्नकी पुस्तक क्रमशः संपूर्णहोयँगी।